कविवर लक्ष्मीनारायणशर्म्मं विनिर्म्मिता । सस्वकृतप्रभाख्यव्याख्या ॥

# ॥ श्रीशङ्करध्यानरत्नमाला ॥

श्रीबुधसिंहतनूज श्रीघासीरामवैद्यवरतनुजः ॥ मेरठनगर निवासी गौडेन्द्रोगुणषडङ्क-
भूवर्षे ॥ १ ॥ श्रीगणपतिप्रसादाश्विकीर्त्तिकेन्दुः प्रकाशमेतस्याः ॥ श्रीशङ्करतुष्टि
कृतेस्वधनव्ययतोव्यधाद्भक्तया ॥ २ ॥

पश्चिमदेशाभरणश्रीमद्भयहरपुरात्तजन्माऽयम् ॥ श्रीकाशीपुरवासी लक्ष्मीनारायणः कविर्ज्जयति ॥ १ ॥

सम्वत्सर १९६३ कार्त्तिकशुक्ले ११ रवि वासरे ।
काश्यां सिद्धेश्वर यन्त्रालये मुद्रितेयम् ।

ओं स्वस्ति श्रीगणपतये नमः ॥ अथ श्रीशङ्करध्यानरत्नमाला ॥ सिन्दूराचलविजयी स्वद्युतिपटलेन भक्तकल्पतरुः निखिलामरवरमवरं श्रीमत्किञ्चनमहश्शिवायास्तु ॥ १ ॥ वाणीगीर्वाणमुकुटनानारत्नप्रकाशिपदपीठा ॥ जडजडताहृति दक्षा मत्पक्षालम्बिनी भवतात् ॥ २ ॥ गुरुपितृबुधवरचरणान्सस्वस्थामरवरादिकाङ्क्षाशीम् ॥ नत्वा शिरसा मनसा ध्यात्वा भूत्वा तदेकतानमतिः ॥ ३ ॥ व्याख्यां श्रीशङ्करध्यानरत्नमालाप्रकाशिनीम् ॥ कुर्वे श्रीशङ्करध्यानलग्नचित्तो मनोमुदे ॥ ४ ॥

॥ १ ॥

ॐ॥ श्रीमद्वैयाघ्रचर्म्मास्थितसरलतनुर्बद्धपद्मासनस्थः कुन्दक्षीरेन्दुहीरस्फटिकतुहिनरुक् त्र्यम्बक इचन्द्रभालः ॥ राजद्रुद्राक्षराजिस्फुरदमललसत्काञ्चनोद्भासिकेशो नासाग्रध्यानलग्न स्थिरतरपरदृक्पातु मांविश्वनाथः ॥ १ ॥

कृतीन्द्रयोगीन्द्रकवीन्द्रलक्ष्मीनारायणाम्भोधिसमुद्भवं सत् ॥ काव्यामृतं साधुबुधानि पीय विना प्रयासं विबुधा भवेयुः ॥ ५ ॥ ॥ १ ॥

अथच पाश्चिमदेशपरमप्रतिष्ठानिदानश्रीसुरसरित्समाननिखिलभूमण्डलधुनीप्रधानश्रीमाह्नितस्ताभिधानतरङ्गिणीतीरवार्त्ति लोकोत्तरप्रशस्तिभयहरनामकनगरलब्धजन्मा ॥ कैवल्यमुक्तिवीरुद्भूमिसुरासुरनरादिसमर्चनीयपादपद्मश्रीविश्वनाथमुख्यराजधानीवाराणसीनिवासविहितपरमादरः ॥ सौजन्यादिकागण्यपुण्यगुणगणागणनीयमहिमा ॥ अमिताऽतिसितयशस्तोमसोमप्रभाप्रभासिताऽखिलावनितलः ॥ सहृदयहृदयाह्लादिरहस्यः ॥ सदोषीप्रयासः ॥ अतिपवित्रकर्म्मा ॥ कवीन्द्रः ॥ श्री

मांस्तत्र भवान् ॥ लक्ष्मीनारायणशर्म्मा ॥ म्रभ्नैर्यानान्त्रयेणात्रिमुनियतियुता स्रग्धरा कीर्तितेयमित्येतल्लक्षणैर्न्नवाधिकशतस-ङ्ख्याकैः ॥ स्रग्धराख्यैश्छन्दोभिः ॥ श्रीशङ्करध्यानरत्नमालाख्यम्प्रबन्धञ्चिकीर्षुः ॥ आदौ ॥ स्वाशीर्वादात्मकमङ्गलगर्भम् ॥ स्वप्नलब्धदर्शनस्य ॥ कैलासाचलातिरमणीयप्रदेशनिवासिनः ॥ श्रीशङ्करस्य ॥ ध्यानमाह ॥ श्रीमदिति विश्वनाथः विश्व-स्यजगतः ॥ अखिलवस्तुमात्रस्यवा ॥ विश्वात्वतिविषायां स्त्रीजगतिस्यान्नपुंसकम् ॥ ननाशुण्ठ्याम्पुंसिदेवप्रभेदश्चाखिले त्रिष्वातिमेदिनी ॥ नाथःप्रभुः ॥ नियन्तेतियावत् ॥ विशेषणमाहिम्ना श्रीशङ्करः ॥ माम् ॥ पातु ॥ जन्ममरणादिदुस्सहदुःखैक-निलयात्संसारात् ॥ रक्षतु ॥ कैवल्यमुक्तिंवितरत्वित्यर्थः ॥ कीदृशोविश्वनाथः ॥ श्रीमत् ॥ अतिनवीनत्वविचित्ररूपत्वा-तीवमृदुलत्वादिना ॥ अत्यन्तशोभमानम् ॥ यत् ॥ वैयाघ्रंमृगराजविशेषशार्दूलसम्बन्धि ॥ चर्म्माजिनम् ॥ शार्दूलद्वीपिनौ व्याघ्रेइति ॥ अजिनञ्चर्म्मकृत्तिःस्त्रीतिचामरः ॥ तत्र तदुपरि ॥ स्थिता ॥ योगाभ्यासावसरस्थानकविशेषेण ॥ समुप-विष्टा ॥ सरलाऽकुटिला ॥ तनुः कायः ॥ यस्य ॥ सतथोक्तः ॥ तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरलेकृशेइतिमेदिनी ॥ पु० की० ॥ बद्धंसन्दानितम् ॥ यत् ॥ पद्मासनम् ॥ तेन तिष्ठतीतिसतथोक्तः ॥ पद्मासनलक्षणन्तु ॥ वामोरूपरिदक्षिणञ्च चरणंसंस्थाप्यवामन्तथा दक्षोरूपरिपश्चिमेन विधिनाधृत्वाकराभ्यान्दृढम् ॥ अंगुष्ठौहृदयेनिधाय चिबुकंनासाग्रमालो-कयेदेतद्व्याधिविनाशकारि यमिनाम्पद्मासनम्प्रोच्यते ॥ इतिहठयोगप्रदीपिकायाम् ॥ एतदृष्ट्या ॥ ग्रीवांविहाय ॥ तनुसार लयम्बोध्यम् ॥ पु० की० ॥ [illegible] ॥ हीरोवज्रापरपर्यायश्शुभ्रोमणि

विशेषः ॥ स्फटिकोऽपि ॥ शुभ्रोमणिविशेषः ॥ तुहिनंहिमम् ॥ तेषाम् ॥ रुगिवरुग्दीप्तिर्यस्य ॥ सतथोक्तः ॥ अतिगौरशरीरकान्तिरित्यर्थः ॥ पु० की० ॥ त्रीणिसूर्य्यचन्द्रानलरूपाणि ॥ अम्बकानिलोचनानियस्य ॥ सतथोक्तः दैवदीपस्तुलोचनम् अम्बकञ्चेतित्रिकाण्डशेषः ॥ पु० की० ॥ चन्द्रोबालेन्दुः ॥ भालेललाटेयस्य ॥ सतथोक्तः ॥ पु० की० ॥ राजताम् ॥ अतिसूक्ष्मस्निग्धवर्त्तुलसारवत्त्वात् ॥ अत्यन्तदेदीप्यमानानाम् ॥ रुद्राक्षाणाम् ॥ राजयः ॥ सरस्वरूपाः ॥ उपरितनातिलम्बमानचिकुरवरप्रोताः पङ्क्तयः ॥ राजिः स्त्री पङ्क्तिलेखयोरितिमेदिनी ॥ ताभिः ॥ स्फुरन्तश्चञ्चन्तः ॥ अमलाअतिस्वच्छाः ॥ लसन्तोबहुलकान्तिकान्ताः ॥ काञ्चनोद्भासिनः ॥ स्वर्णवत्प्रकाशिनः ॥ काञ्चनादप्युद्भासिनोवा ॥ स्फुरदादिविशेषणविशिष्टकाञ्चनवदुद्भासिनोवा ॥ केशाः ॥ पृष्ठप्रदेशमभिव्याप्य ॥ नितम्बस्थलमातिक्रम्य ॥ वर्त्तमानाः ॥ वक्तुमशक्यरमणीयस्वरूपाः ॥ कचाः ॥ यस्य सतथोक्तः ॥ पु० की० पद्मासनस्थत्वात् नासाग्रेनासिकाग्रप्रदेशे ॥ यद् ध्यानम् ॥ स्वस्वरूपचिन्तनस्वरूपम् ॥ तत्र ॥ लग्नासमासक्ता ॥ स्थिरतराऽत्यन्ताऽचपला ॥ अतएव ॥ परा ॥ परमार्थतस्सर्वोत्कृष्टा ॥ दृग्दृष्टिर्यस्य सतथोक्तः ॥ १ ॥ अथ भङ्ग्यन्तरेण ध्यानान्तरमाह ॥ श्रीमदिति ॥ शिवायाः ॥ श्रीगौर्य्याः ॥ ईशस्स्वामी ॥ श्रीशङ्करः ॥ ईशस्स्वामिनिरुद्रेचेतिहेमचन्द्रः ॥मे॥ अनन्यगतिकस्य ॥ कैवल्याकाङ्क्षिणः ॥ मम मनसि ॥ भक्तिभावस्वच्छत्वात् ध्यानार्हहृदये ॥ वस्तु ॥ सकलक्लेशनिरसनपूर्वकम् ॥ परमानन्दसाधनीभूताम् ॥ स्वस्थितिम् विदधात्वित्यर्थः ॥ कीदृशशिवेशः ॥ श्रीमान् ॥ लोकोत्तरविभवविशिष्टत्वात् ॥ अतिविशदं ... ॥ ... ॥ कैलासनामकः ॥ स्वकीयः ॥ ॥ २ ॥

पर्वतवरः ॥ तस्य ॥ भास्वन्ती ॥ विविधरत्नचयकनकरजितभित्ति शिखरलतातरुगुल्मादिप्रकाशिता ॥ अतएव प्रचुररुचिराबहुलरमणीया भूर्भूमिः ॥ तत्र ॥ संस्थितोनिरुपद्रवतया वर्त्तमानः ॥ उच्चोऽत्यन्तौन्नत्यादिशोभमानः ॥ अमर द्रुर्देवतरुः ॥ कल्पवृक्षइतियावत् ॥ तस्य ॥ या ॥ छाया ॥ अनातपः ॥ तया ॥ शान्तः ॥ मनस्स्वास्थ्यसाधनीभूतः ॥ प्रदेशो भुतलविशेषः ॥ तत्र ॥ आस्तृतंविस्तारितम् ॥ यत् ॥ हरेः केसरिणः विलसत् ॥ अतिमृदुलत्वादिना ॥ प्रकाशमानम् । चर्म्माऽजिनम् ॥ तस्य ॥ पृष्ठे ॥ ध्यानावस्थानार्हे ॥ पृष्ठप्रदेशे ॥ उपविष्टस्संस्थितः ॥ पु० कौ० ॥ सन्तप्तम् ॥ सम्यक् ॥

**श्रीमत्कैलासभास्वत्प्रचुररुचिरभूसंस्थितोच्चामरद्रुच्छायाशान्तप्रदेशास्तृतहरिविलसच्चर्म**
**पृष्ठोपविष्टः सन्तप्तस्वर्णवर्णच्छविजिततरणिप्राज्यदीर्घोर्ध्वकेश स्स्वध्यानैकान्तचेतावसतु**
**मनसि मे शान्तमूर्त्तिर्गिरीशः ॥ २ ॥**

अग्निसन्तापगर्भम् ॥ अतीवोज्ज्वलमित्यर्थः ॥ यत् ॥ स्वर्णंहेम ॥ तस्य ॥ वर्णइववर्णोयेषाम् ॥ ते ॥ अतएव ॥ छविजित तरणयः ॥ स्वप्रभाधः कृतमार्त्तण्डमण्डलाः ॥ प्राज्याबहुलाः दीर्घाअत्यन्तलम्बमानाः ॥ ऊर्ध्वाउच्चैरवस्थानाः ॥ कृतनक्षत्रपथस्पर्शा इतियावत् ॥ केशाः कुन्तलाः ॥ यस्य ॥ सतथोक्तः ॥ पु० कौ० ॥ स्वध्यानैकान्तचेताः ॥ सदैकरसाविगलितचैद्यान्तरानन्द मयकालत्रयाऽबाध्यस्वस्वरूपध्यानैकतानमनस्कः ॥ पु० कौ० ॥ अतएव ॥ शान्तमूर्तिः ॥ स्वध्यातृभक्तजनातिवशान्तिप्रद

॥ ३ ॥ विग्रहः ॥२॥ अथस्वमनः प्रियतमन्ध्यानान्तरमाह ॥ उच्चैरिति ॥ पार्वतीशम्पर्वतराजाहिमालयात्मजास्वामिनम् श्रीशङ्करम् ॥ अहम् ॥ स्मरामि ॥ यमनियमादिनिर्म्मलीकृते ॥ स्वहृदये ॥ ध्यानविषयम् ॥ विदधामि ॥ कीदृशम्पार्वतीशम् उच्चैरत्युन्नते ॥ हैमे ॥ अत्यन्तोत्तमस्वर्णनिर्मिते ॥ अतएव ॥ प्रभाश्चातिदीप्तिच्छटादीप्यमाने ॥ विविधैर्न्नानास्वरूपैः ॥ नानाजातीयैश्च ॥ मणिगणैः स्वखचितैरत्नप्रकरैः ॥ भ्राजिनिशोभमाने ॥ प्रभाञ्चादितिमणिगणविशेषणंवा ॥ सिंहासनेसिंहाकारेपर्यङ्कविशेषे ॥ तिष्ठतीतितथाभूतस्तम् ॥ पु० की० ॥मुक्ताः॥ गजेन्द्रकुम्भस्थलादि समुत्पन्नानि निर्दोषाणिमौक्तिकानि ॥ माणिक्या

उच्चैर्हैमप्रभाञ्चद्विविधमणिगणभ्राजि सिंहासनस्थं मुक्त माणिक्यहीरप्रमुखमणिलसत्स्वर्णभूषावृताङ्गम् ॥ मध्यान्हार्कप्रकाश प्रविजयिविलसत्सज्जटाजूटभारं नागेन्द्रोदारहारं स्वभवभयहर म्पार्वतीशं स्मरामि ॥ ३ ॥

नि ॥ शोणवर्णाः ॥ अनर्घ्याः ॥ मणिविशेषाः हीरावज्राणि ॥ ते प्रमुखा आदयः प्रमुखे ॥ आदौवा ॥ येषाम् ॥ ते ॥ ये ॥ म- ॥ ३ ॥
णयोरत्नानि ॥ तैः स्वखचितैः ॥ लसन्त्यश्शोभमानाः ॥ याः ॥ स्वर्णभूषाहेमभूषणानि ॥ कटककुण्डलादीनि ॥ ताभिः आवृतंव्याप्तम् ॥अङ्गंशरीरम् ॥ आवृतानिव्याप्तानि॥ अङ्गानिपादपद्मादयोऽवयवावायस्यसतथोक्तस्तम् ॥ पु०की० ॥ मध्याह्नार्कप्रकाशप्रविजयीदिवसमध्यवर्त्तिमार्त्तण्डमण्डलप्रद्योतातिरेकः [illegible] प्रधानत्वादत्यन्तसज्जमानः ॥

सतीनामतिरमणीयानाम् ॥ जटानांलग्नकचानाम् ॥ जटालग्नकचेमूलेइतिमेदिनी ॥ जूटस्यबन्धाविशेषस्य भरएवभारोऽतिश
योयस्य ॥ सतथोक्तस्तम् ॥ यद्वा ॥ भादीप्तिच्छटाः ॥ रातिददाति ॥ सर्वासुदिक्षुप्रसारयतीतियावत् ॥ सतथोक्तस्तम् ॥
रादाने ॥ आतोऽनुपसर्गेकइतिकः ॥ पु० की० ॥ नागेन्द्रः ॥ श्रीमाननन्तोभगवान् ॥ वासुकिर्वा उदारोमहान् ॥ हारोऽतिशु
भ्रत्वान्मुक्तावलिर्यस्य ॥ सतथोक्तस्तम् ॥ उदारोदातृमहतोर्दक्षिणेऽप्यभिधेयवदिति ॥ हारोमुक्तावलौयुधीतिचमेदिनी ॥
पु० की० ॥ हरतीतिहरः ॥ पचाद्यच् ॥ स्वेषामात्मीयानाम् ॥ भक्तानाम् ॥ भवभयस्य ॥ जन्ममरणादिदुस्सहदुःखस्वरू
पसंसारभीतेः ॥ हरोनिवर्त्तकः ॥ कैवल्यमुक्तिप्रदइत्यर्थः ॥ तम् ॥ स्वस्स्यात्पुंस्यात्मनिज्ञातौ त्रिष्वात्मीयेधनेऽस्त्रियामिति ॥
भवः क्षेमेशसंसारेसत्तायाम्प्राप्तिजन्मनोरितिचमेदिनी ॥ ३ ॥ ध्यानान्तरमाह ॥ चञ्चदिति ॥ श्रीमहेशं श्रीशङ्करम् ॥ अहम् ॥
भजेसेवे ॥ ध्यानविषयीकुर्वेइत्यर्थः ॥ कीदृशंमहेशम ॥ चञ्चता ॥ स्वर्णमणिमौक्तिकादिघटितत्वादत्यन्तदे दीप्यमानेन प-
र्याणेनपल्ययनेन ॥ पल्ययनम्पर्याणमिति त्रिकाण्डशेषः ॥ राजतिप्रकाशमाने ॥ वृषभवरस्यस्वकीयस्यमहोक्षस्य महतिविशा-
ले ॥ सकललोकपूजितेवा ॥ पृष्ठदेशे ॥ उपविष्टस्सावकाशंस्थितः ॥ सतथोक्तस्तम् ॥ पु० की० श्रीमत्याः ॥ श्रीमन्तो
वा । गङ्गायास्तरङ्गाः ॥ लहर्य्यः ॥ तैः ॥ स्फुरिताः ॥ इतस्ततश्चलिताः ॥ वराः ॥ श्रेष्ठाः दर्शनीयतराइतियावत् जटायस्य
सतथोक्तस्तम ॥ पु० की० ॥ भालेललाटे ॥ चन्द्रोबालकलानिधिर्यस्यसतथोस्तक्तम् ॥ पु० की० त्रीणि सूर्यादीनि नेत्रा
णिनयनानि ॥ यस्य ॥ सतथोक्तस्तम् ॥ पु० की० ॥ मृडयति ॥ आजिनावतिशोभमानौ ॥ पार्श्वौवामदक्षिणपार्श्व

श्री शं.

प्रदेशौ ॥ यस्य सतथोक्तस्तम् ॥ आदिना ॥ नान्दप्रमथाद्याग्राह्यः ॥ पु० की० ॥ धृतः ॥ वरः ॥ स्वर्णमणिघटितत्वादत्य
न्तोज्ज्वलः ॥ डमरुः ॥ लोकेऽतिवप्रसिद्धः ॥ उभयतश्चर्म्मावनद्धः ॥ मुष्टिग्राह्यमध्यः ॥ वाद्यविशेषः ॥ येन ॥ सतथोक्त-
स्तम् ॥ पु० की० ॥ दीप्त्यास्वप्रभया ॥ दीप्तम्प्रकाशितम् ॥ ज्वालामालाविशालम् ॥ त्रिशूलंशस्त्रविशेषोयस्य ॥ सतथोक्त
स्तम् ॥ पु० की० ॥ सर्प्पेन्द्रस्सर्पराजोवासुकिः ॥ उरुविशालम् ॥ उपवीतंयज्ञसूत्रम् ॥ यस्य ॥ सतथोक्तस्तम् । पु० की०
॥ ४ ॥ त्रिजगदधिपतिंलोकत्रयविशेषप्रभुम् ॥ ४ ॥ अथ लोकोत्तरंध्यानान्तरमाह ॥ कम्बुग्रीवोन्नतास्यामिति ॥ श्रीगिरीशंश्रीमत्कै

चञ्चत्पर्याणराजद्वृषभवरमहापृष्ठदेशोपविष्टं श्रीमद्गङ्गातरङ्गस्फुरितवरजटम्भालचन्द्र
न्त्रिनेत्रम् ॥ भृङ्ग्याद्याभ्राजिपार्श्वं न्धृतवरडमरुन्दीप्तिदीप्तत्रिशूलं सर्प्पेन्द्रोरूपवीतन्त्रि
जगदधिपतिं श्रीमहेशम्भजेऽहम् ॥ ४ ॥

लासाचलाधिपतिं श्रीशङ्करम् ॥ अहम् भजेसेवे ॥ हृद्देशेधारयामीत्यर्थः ॥ कीदृशङ्गिरीशम् ॥ कम्बुश्शङ्खः ॥ तस्य ॥ ग्री-
वेवग्रीवा रेखात्रयाढ्यः कण्ठोयस्य ॥ तत्तथोक्तम् ॥ उन्नतमुच्चैः कृतम् ॥ अतिसरलमित्यर्थः ॥ आस्यंमुखंयस्यस तम् ॥ ॥ ४ ॥
पु० की० ॥ नतमतिनम्रम् ॥ भृकुटियुगन्धनुर्विजयिश्यामलमसृणातरभ्रूयुगं यस्यसतम् ॥ पु० की० ॥ मीलिताक्षम् ॥ नि-
रुद्धमनस्कत्वान्निरुन्मेषनयनम् ॥ पु० की० ॥ स्थिराङ्गमचलवदचलगात्रम् ॥ पु० की० ॥ स्वच्छादर्शाभजानुस्थिते ॥ अति

निर्मलस्फटिकादिनिर्मितदर्प्पणतलप्रभजानुद्वयोत्तानविधिविराजमाने करकमलेहस्तारविन्दे यस्य सतथोक्तस्तम् ॥ पु० की०
नीलः ॥ सकललोकरक्षार्थम् ॥ धृताऽतिविषमसामुद्रविषत्वात् ॥ इन्द्रनीलमणिप्रभः कण्ठोगलोयस्य ॥ सतथोक्तस्तम् ॥
पु० की० ॥ शोभना ॥ परमरिपुत्रिभुवनविजयिकन्दर्प्पदग्धशरीरजत्वात् लोकोत्तरलावण्यसर्वाङ्गसंसर्गित्वात् ॥ दु-
ग्धादिगौरत्वादितिरस्कारित्वाच्च ॥ परमरमणीया ॥ भूतिभस्म ॥ सकललोकविलक्षणा ॥ सम्पदैश्वर्यसमृद्धिर्वा ॥ यस्य ॥
सतथोक्तस्तम् । भूतिस्तुभस्मनि । मांसपाकविशेषेचसम्पदुत्पादयोरपीतिहेमचन्द्रः । पु० की० आशादिशः वस्त्रमम्बरम्

कम्बुग्रीवोन्नतास्यं नतभृकुटियुगं मीलिताक्षं स्थिराङ्गं स्वच्छादर्शाभजानुस्थितकरकमलं
नीलकण्ठसुभूतिम् ॥ आशावस्त्रं निराशम्भव दवजलदम्भक्तजीवातुमेव न्देवादेवादि
वन्द्यञ्जठरगभुवनं श्रीगिरीशम्भजेऽहम् ॥ ५ ॥

यस्य ॥ सतथोक्तस्तम् ॥ सर्वेश्वरत्वेपि ॥ स्वाऽकिञ्चनत्वप्रकाशिनमित्यर्थः ॥ पु० की० निराशम्पूर्णब्रह्मस्वरूपत्वात् । नि
रस्तनिःखिललालसम् ॥ अतएव ॥ विरोधपरिपरिहारोऽनुसन्धेयः ॥ पु० की० ॥ भवस्संसारएव ॥ दवः ॥ सर्वतोदिक ॥
दाहकत्वात् ॥ वनाग्निः ॥ दवदावौवनारण्यवह्नीइत्यमरः ॥ तस्य ॥ जलदोवारिदइवेतिसतथोक्तस्तम् ॥ निजजनकैवल्यप्रदा
नातिशक्तमितियावत् ॥ पु० की० ॥ भक्तानांसेवकानाम् । जीवातुर्जीवनौषधम् । संसाररोगनिरासपूर्वकम् ॥ मोक्षस्वरूप

महारोग्यविधायिनी ॥ सेवा ॥ कायिकादित्रिप्रकारासमर्च्चना ॥ यस्य ॥ सतथोक्तस्तम् ॥ जीवातुर्ज्जीवनौषधमित्यमरः ॥ पु० की० ॥ देवाविधिविष्णुशक्रादयः ॥ अदेवादैत्यराक्षसादयः ॥ ते आदौयेषामृषिमुनिनरोरगपशुपतङ्गादीनाम् ॥ तैः ॥ वन्द्यः ॥ स्वकुशलार्थम् स्तवनीयोनमस्करणीयोवा सतथोक्तस्तम् ॥ पु० की० प्रलयावसरे ॥ विराडरूपत्वेवा ॥ जठरगानि ॥ सावकाशम् ॥ कुक्षिस्थितानि ॥ भुवनानित्रयोलोकायस्य ॥ सतथोक्तस्तम् ॥ अनन्तब्रह्माण्डाश्रयमित्यर्थः ॥ ५ ॥ अथच ॥ भक्तजनप्रबलतरप्रमोदप्रदायिध्यानान्तरमाह ॥ प्रोच्चैरिति ॥ श्रीमहादेवस्सर्वदेवगुरुः ॥ श्रीशङ्करः ॥ सदासर्वे-

प्रोच्चैराकाशकाशिप्रचुरकचभरोत्क्षेपविक्षोभिताभ्रः प्रोल्लासोल्लासिलास्यप्रपदहतिकृतक्ष्मा
तलोत्कम्पहृष्टः ॥ प्रोदण्डोच्चाट्टहासप्रसरकृतजगत्पूरणोत्साहपूरो दिग्वासाश्चन्द्रगौरो
मनसि मम सदा श्रीमहादेव आस्ताम् ॥ ६ ॥

दा ॥ मम मनसि ॥ अनन्यचिन्तके ॥ भक्त्यतिशयपूते ॥ अन्तः करणे ॥ आस्तांसमुपविशतात् ॥ मद्ध्यानविषयोभवतादित्यर्थः ॥ कीदृशोमहादेवः ॥ प्रोच्चैरत्युन्नतः ॥ अतएव ॥ आकाशकाशीव्योमप्रकाशी ॥ प्रचुरतरोऽतिबहुलः ॥ कचभरश्चिकुरातिशयः ॥ अतिशयोभरइत्यमरः ॥ तस्ययः ॥ उत्क्षेपः ॥ ऊर्द्ध्वप्रदेशे ॥ सोत्साहम् ॥ प्रक्षेपणम् ॥ तेन ॥ क्षोभितानीतस्ततश्चालनेन ॥ विरलीकृतानि अभ्राणिमेघाः ॥ येन ॥ सतथोक्तः ॥ अभ्रम्मेघेचगगनेधातुभेदेच काञ्चनेइतिमेदिनी ॥ ॥५॥

पु० की० प्रोल्लासेनसायन्तनश्रीपार्वतीपुरोवर्तिताण्डवोत्माह प्रमोदातिशयेन ॥ उल्लासिसमुत्तरङ्गम् ॥ यत् ॥ लास्यंनर्त्तनम् ॥ तत्र ॥ कृताविहिता ॥ या ॥ प्रपदहतिः ॥ पादाग्रताडनम् ॥ तया ॥ कृतोयः ॥ क्ष्मातलोत्कम्पोऽखिलभूतलसञ्चालनम् ॥ तेन ॥ दृः प्रसन्नः ॥ पु० की० ॥ प्रोद्दण्डोऽत्युद्धतः ॥ उच्चोमहाशब्दसंस्कृतः ॥ अट्टहासोहासविशेषः ॥ तस्ययः प्रसरोविस्तारः तेनकृतः ॥ जगत्पूरणोत्साहपूरोऽखिलब्रह्माण्डपूर्तिमानसोल्लासभरोयेनसतथोक्तस्तम् ॥ पु० की० ॥ दिग्वासाः अतीवस्वतन्त्रत्वादत्यन्तानिर्भयत्वाद्वा दिगम्बरः । पु० की० । चन्द्रगौरः शारदराकासुधाकरवदतीवशुभ्रकान्तिः

धीरः क्षीराब्धिगौर स्तनुभुजगतनूमञ्जुलोद्भासिभूष स्सद्योजातेन्दु मौलिःकलिमल दलन स्स्वाङ्घ्रिसेवापराणाम् ॥ अङ्कस्थाद्रीशकन्यः सकलदिविषदा मग्रगण्यः शरण्य स्स्वाराजादिप्रभृतस्तुतिचलदलिक श्शङ्करो मेहृदि स्तात् ॥ ७ ॥

ध्यानैकपरायणयोगीन्द्रमानसाह्लादकारिदर्शनइत्यर्थः ॥ ६ ॥ अथ ॥ महामहिमशालिध्यानान्तरमाह ॥ धीरइति ॥ शङ्करश्श्रीमहादेवः ॥ मे अनन्यपरायणस्य ॥ दीनतरस्य ॥ संसारदुःखातिव्यग्रबुद्धेर्मम ॥ हृदि ॥ अतिस्वच्छेहृदयावकाशस्ताद्भवतात् ॥ ध्यानविषयोजायतामितियावत् ॥ कीदृशश्शङ्करः ॥ धीरः ॥ लोकोत्तरगौरवाश्रयत्वादचलवदचलमनस्कः ॥ स्ववशकृतातिशयप्रभावात् ॥ ब्रह्माण्डजननादिकृतितियावत् ॥ पु० की० क्षीराब्धिगौरः ॥ दुग्धसमुद्रवदतिशुभ्रदीप्तिः ॥ स्व-

कीयसत्वगुणप्रधानत्वप्रकाशकइत्यर्थः ॥ पु० की० ॥ तनवोऽतिलघवः येभुजगाउरगाः ॥ तेषाम् ॥ याः ॥ तन्वः शरीराणि ॥
ताएव ॥ मञ्जुलारुचिराः ॥ उद्भ्रामिन्यश्चञ्चन्त्यः ॥ भूषाकटककुण्डलादीनिभूषणानि ॥ यस्यस तथोक्तः ॥ लोकविलक्षण
सामर्थ्यइतियावत् ॥ पु० की० ॥ सद्यो जातेन्दु मौलिर्नवशशधर किरीटः ॥ मौलिःकिरीटेधम्मिल्लेचूडाकङ्केलिमूर्द्धसु ॥ इति हेम
चन्द्रः ॥ पु० की० ॥ स्वाङ्घ्रिसेवापराणां स्वचरणसमर्चनानुरतमनसाम् ॥ स्वभक्तजनानामित्यर्थः ॥ कलिमलदलनः क-
॥ ६ ॥ लिकालप्रभावजनिताखिलकल्मषनिवारकः ॥ पु० की० ॥ अङ्कस्थाद्रीशकन्यः ॥ उत्सङ्गविराजमानपर्वतराजहिमालयात्मजः
अत्यन्त विरक्तचित्तोऽपि ॥ श्रीपार्वतीतपश्चर्य्याप्रभावप्रकाशनार्थम् ॥ गृहस्थजनचर्य्यानुकारीत्यर्थः ॥ पु० की० ॥ सकल
दिविषदांशक्रादीनां समस्तानान्देवानाम् ॥ अग्रगण्यः ॥ तत्तदवसरसमागतामरमहापन्निवारकत्वात् ॥ पुरस्सरः ॥ पु० की० ॥
शरण्यः शरणागतजनसंरक्षणबद्धपरिकरः पु. कि. ॥ स्वस्स्वर्ग्गस्य ॥ राजाऽधिपतिरिन्द्र इन्द्रलोपेपूर्वस्येतिदीर्घः ॥ सः ॥ आदौयेषाम्
तेतथोक्तः ॥ यमवरुणकुबेरादयोदेवाः ॥ तेषाम् ॥ प्रभूताभिर्बहुलतराभिः ॥ स्तुतिभिः ॥ तत्तदवसरकृतैः ॥ वैदिकैर्लौकिकै
र्नानाविधैः । स्तवनैः ॥ चलच्चञ्चलीभवत् ॥ तद्रहस्यास्वादानन्दप्रकाशनाय ॥ स्फुरत् ॥ अलिकंललाटम् ॥ यस्य ॥ सत-
थोक्तः ॥ ललाटमलिकङ्गोधिरित्यमरः ॥ ७ ॥ अथयथारुचि ॥ ध्यानान्तरमाह ॥ सद्यइति ॥ शम्भुः ॥ स्वभक्तपरमानन्द ॥ ६ ॥
निदानम् ॥ श्रीशङ्करः मे ॥ स्वैकाश्रयस्यमम ॥ मानसेहृदये ॥ अस्तुभवतु ॥ ध्यानास्पदञ्जायताम् ॥ कीदृशश्शम्भुः सद्य
स्तत्क्षणमेव ॥ छिन्नाशरारादवतारिता ॥ इभस्याविर्भावस्य ॥ गजासुरस्य कृतिश्चर्म ॥ तया ॥ स्थगितस्सम्यगाच्छा

दितः ॥ अतएव ॥ परिलसन्नतीवचमत्कृतिशाली ॥ अतएव ॥ चारुरतिसुन्दरः ॥ पृष्ठप्रदेशोयस्य ॥ सकललोकोपद्रवावि-
धानोद्धुरगजासुरबधलब्धप्रशस्तिरित्यर्थः ॥ पु० की० ॥ नागाधीशोरुहारः धृतभगवदनन्तसुभगमहा मौक्तिकमालः ॥ पु०
की० ॥ भुजगपरिदृढप्रौढयज्ञोपवीतः ॥ धृतवासुकिदृढतरयज्ञसूत्रः ॥ पु० की० ॥ शङ्खः कम्बुः ॥ प्रोत्फुल्लमतिविकसितम्
पद्मकुड्मलम् ॥ त्रिशिखन्त्रिशूलम् डमरुश्चर्म्मावनद्धोवाद्यविशेषः ॥ तान् ॥ बिभर्ति ॥ चतुर्भिर्हस्तैः ॥ तत्तत्कार्यप्रकाशनार्थम्
दधातीति सतथोक्तः ॥ पु० की० ॥ त्रीणिश्रीमन्मार्त्तण्डप्रभृतीनि ॥ ईक्षणानिनेत्राणियस्यसतथोक्तः ॥ पु० की० नीलकण्ठ

सद्यश्छिन्नेभकृत्तिस्थगितपरिलसच्चारुपृष्ठप्रदेशो नागाधीशोरुहारो भुजगपरिबृढप्रौढयज्ञो
पवीतः ॥ शङ्खप्रोत्फुल्लपद्मत्रिशिखडमरुभृ त्त्रीक्षणो नीलकण्ठः श्रीमा न्भस्माङ्गरागो
जटिलवराशिरा मानसे मे ऽस्तुशम्भुः ॥ ८ ॥

स्सकलजगदुपद्रवापहाराय ॥ धृतसमुद्रमथनोद्भूतमहाविषत्वात् ॥ अतिश्यामलगलमध्यप्रदेशः ॥ पु० की० ॥ श्रीमान् ॥
विलक्षणशोभादिमनोहरः ॥ श्रीर्लक्ष्म्यांसरलद्रुमे ॥ वेषोपकरणेवेशरचनायांमतौगिरि ॥ शोभात्रिवर्गसम्पत्योरितिहेमचन्द्रः
पु० की० ॥ भस्मैव ॥ दग्धानङ्गदेहाविभूतिरेव ॥ अङ्गरागश्शरीरसुन्दरताविधायि ॥ विलेपनम् ॥ यस्य ॥ सतथोक्तः ॥ पु०
की० जटिलज्जटावत् ॥ अतएव ॥ वरमतिदर्शनीयम ॥ शिरः ॥ सर्वोन्नतोमूर्द्धायस्यसतथोक्तः ॥ लोकोत्तरैश्वर्योऽपि ॥

सर्वदैव ॥ धृतमहातपस्विवेशइत्यर्थः ॥ ८ ॥ अथ ॥ स्वहृदयातिशान्त्यर्थम् ॥ ध्यानान्तरमाह ॥ षडिति ॥ शिवस्स्वजनाति
शिवकारीश्रीशङ्करः मे ॥ अनन्यमनसोमम ॥ इहास्मिन् ॥ हृदब्जेहृदयारविन्दे ॥ सदासर्वदा ॥ वसतात् ॥ ध्यानास्प-
दम् ॥ स्तादितियावत् ॥ कीदृशश्शिवः ॥ षड्वक्त्रः श्रीमान्भगवान्कार्त्तिकेयः ॥ इभास्यस्सकलजगदग्रपूजास्पदंश्रीगजाननः ॥
॥ ७ ॥ ताभ्यामङ्कस्थाभ्यां समीपस्थाभ्यांवा ॥ राजन्तीशोभमाना ॥ या ॥ गिरिवरतनया । श्रीपार्वती ॥ तया ॥ अङ्कस्थितया ॥
पार्श्वस्थयावा ॥ भूषितस्समलङ्कृतः ॥ पु० की० ॥ रत्नभूषोदिव्यनानाविधमणिखचितसर्वाङ्गव्यापिभूषणः ॥ पु० की० ॥

षड्वक्त्रेभास्यराजद्गिरिवरतनयाभूषितो रत्नभूषो गङ्गौघाब्जजटौघ श्शशिशकलल सद्भालदे
शस्त्रिनेत्रः सोत्साहंसम्मुखस्थै ऋभुभिरभिनुतःपूर्णचन्द्रप्रकाश स्स्वद्योतद्योतिताश श्शिव
इह वसता त्सर्वदा मे हृदब्जे ॥ ९ ॥

गङ्गौघाब्जजटौघः ॥ श्रीसुरसरित्प्रवाहशोभमानजटासङ्घातः ॥ ओघः प्रवाहः सङ्घातोद्रुतनृत्तम्परम्परा ॥ उपदेशश्चेतिहेम ॥ ७ ॥
चन्द्रः ॥ पु० की० ॥ शशिशकलेनशिशुशशधरेण ॥ लसन्कान्तिमान् ॥ भालदेशोमस्तकप्रदेशोयस्य ॥ सतथोक्तः ॥पु०की०॥
त्रिनेत्रस्त्र्यक्षः ॥ पु० की० ॥ सोत्साहंसनिरुपाधिकभक्तिभावोद्रेकंयथास्यात्तथा ॥ सम्मुखस्थैः पुरतस्स्थितैः ॥ ऋभुभिरि
न्द्रादिभिः ॥ निमित्तविशेषेणसमागतैर्देवैः ॥ अभिनुतस्संस्तुतः ॥ अमरानिर्जरादेवास्त्रिदशाविबुधास्सुराः ॥ सुपर्वाणस्सु-

मनसाख्निदिवंशादिवौकसः ॥ आदितेयादिविषदोलेखाअदितिनन्दनाः ॥ आदित्याऋभवोऽस्वप्नाअमर्त्याअमृतान्धसः ॥ वर्हिर्म्मुखाः क्रतुभुजोगीर्वाणादानवारयः ॥ बृन्दारकादैवतानिपुंसिवादेवताःस्त्रियामित्यमरः ॥ पु० की० ॥ पूर्णचन्द्रस्यशारदराकासुधांशोः प्रकाशइवप्रकाशोयस्यसतथोक्तः ॥ पु० की० ॥ स्वद्योतेननिरुपाधिकाकृत्रिमस्वकीयातिशुभ्रप्रकाशेन ॥ द्योतिताःप्रकाशिताः ॥ आशाः ॥ सर्वाः ॥ प्राच्यादयोदिशाः ॥ स्वभक्तजनमनोरथावा ॥ येन ॥ सतथोक्तः ॥ आशास्तुतृष्मा दिशोस्त्रियामितिमेदिनी ॥ सर्वसमर्थसम्मुखेदव ॥ स्वशुभाकाङ्क्षिजनाभिलाषाः प्रकाशन्ते ॥ इतितात्पर्यार्थः ॥ ९ ॥ अथ-

सद्भस्मोद्धूलिताङ्ग स्स्फटिकगिरिरुचि स्सूर्यचन्द्रानलाक्षो बालेन्दुभ्राजिभालो लसदसितगलः कालकालोऽहिमालः ॥ देवेन्द्राद्यर्च्चिताङ्घ्रिः प्रणतमुनिजन स्सज्जनैकानुरागः कोटिब्रह्माण्डभर्त्ता निवसतु नितरां मानसेमे स्मरारिः ॥ १० ॥

भङ्ग्यन्तरगर्भन्ध्यानान्तरमाह ॥ सदिति ॥ स्मरारिस्संसारानित्रारिमहोपद्रवकारिमनासिज प्राणापहारीश्रीशङ्करः ॥ मेमम मानसे ॥ बन्धमोक्षकारणे॥मनासि ॥ नितरांसदैव ॥ वसतु॥अखिलदुःखनिलयाज्ञानान्धकारनिवारणायप्रकाशताम् ॥ इत्यर्थः ॥ कीदृशस्स्मरारिः ॥सद्भस्मोद्धूलिताङ्गस्स्वतेजोदग्धानऽन्तशक्तिकन्दर्पकायातिपवित्रविभूतिरूषितसर्वावयवः ॥पु०की॥ स्वतोऽपि ॥ स्फटिकगिरिरुचिरत्यन्तसितकान्तिः ॥ पु०की० ॥ सूर्यचन्द्रानलाक्षोरबीन्द्वग्निनेत्रः ॥ पु० की० ॥ बालेन्दुभ्राजि

भालेनयविधु सुन्दरमस्तकप्रदेशः ॥ पु० की० ॥ लसदसितगलोधृतगरलत्वादतिरुचिरनीलकण्ठप्रदेशः ॥ पु० की० ॥ कालस्यापिकालः ॥ कालत्रयाबाध्यः ॥ सदैकरसइतियावत् ॥ पु० की० ॥ अहिमालस्स्वभक्तजनप्रमोदार्थम् ॥ धृतनागेन्द्रहारः ॥ पु० की० ॥ देवेन्द्रादिभिः ॥ अर्चितनौपूजितौ ॥ अङ्घ्रीचरणौयस्यसतथोक्तः ॥ पु० की० ॥ प्रणताभक्तिभावनम्राः मुनिजनायोगाभ्यासैकपरायणामहर्षयोयत्रसतथोक्तः ॥ पु० की० ॥ सज्जनेष्वेव ॥ एकांमुख्योऽनुरागोवातत्सलयंयस्यसतथोक्तः ॥ एकेमुख्यान्यकेवलाइत्यमरः ॥ पु० की० ॥ कोटिब्रह्माण्डभर्त्ता ॥ अखिलजगत्स्वामी ॥ १० ॥ अथसमुल्लसद्भक्ति

स्वर्णाभप्रोच्चकेश श्शशधरशकलोल्लासिभालप्रदेश स्सूर्याम्भोजानलाक्ष स्स्फटिकतुहिन रुग्दुःखविध्वंसदक्षः ॥ ग्रीवासारल्यशोभी मृगडमरुवराभीतिहस्तःप्रशस्त स्त्रैलोक्याधीश्वरो ऽयं मम वसतु हृदि श्रीशिवेशो महेशः ॥ ११ ॥



रसःकवीन्द्रः ॥ ध्यानान्तरमाह ॥ अयन्देशकालवस्तुपरिच्छेदशून्यस्सकललोकप्रसिद्धमाहिमातिशयः ॥ महेशोमहाप्रभुः ॥ विशेषणमहिम्नाश्रीशङ्करः ॥ मम स्वभक्तस्य ॥ हृदिहृदयावकाशे ॥ वसतु ॥ध्यानास्पदम्भवतुतरामित्यर्थः ॥ कीदृशोमहेशः ॥ स्वर्णाभाहेमवच्चमत्कृतिभृतः ॥ प्रोच्चाआकाशाभिमुखाः ॥ केशाशिरोरुहायस्यसतथोक्तः ॥ पु० की० ॥ शशधरशकलेनाधिशुतरशशिना ॥ उल्लासीप्रोद्बुद्धप्रकाशः ॥ स्फटिकमयादर्शवत् स्फुरच्चितियावत् ॥ भालप्रदेशोललाटपटलंयस्यसतथोक्तः ॥

पु० की० ॥ सूर्याम्भोजानलाक्षः ॥ रविचन्द्रवह्निनयनः ॥ अब्जोऽस्त्रीशङ्खेनानिचुलेधन्वन्तरौचाहिमाकिरणे ॥ क्लीवस्यपद्मे इति मेदिनी ॥ पु० की० ॥ स्फटिकतुहिनरुक्स्फटिकप्रालेयदीप्तिः ॥ पु० की० ॥ दुःखानामाध्यात्मिकादीनान्त्रयाणाम् ॥ विध्वंसे निश्शेषतयानिवारणे ॥ दक्षश्चतुरः ॥ स्वभक्तदुःखदूरीकरणसमर्थइत्यर्थः ॥ पु० की० ॥ योगाभ्यासावसरे ॥ ग्रीवासार-ल्पेनकण्ठाऽवक्रावस्थानेन ॥ शोभतेतच्छीलः ॥ सतथोक्तः ॥ पु० की० ॥ मृगोमहर्षिकृत्यास्वरूपः कृष्णहरिणः ॥ डमरुर्वा-द्यविशेषः ॥ वरोवरमुद्रा ॥ अभीतिरभयमुद्रा ॥ हस्तेषुकरेषु ॥ यस्यसतथोक्तः ॥ पु० की० ॥ प्रशस्तस्सर्वैर्थैवश्रेष्ठः ॥ पु०

सर्प्यालङ्काररम्यः श्रुतिचरमवचोमात्रगम्योऽप्यगम्य स्स्वेनानन्देनधन्य स्त्रिज गति नितरां सर्वदेवाग्रगण्यः ॥ आकाशोद्भासिकाय स्स्वजनगुरुदय श्चण्डधामो रुगायः श्रीमान्नृत्य न्नजस्रं वसतु मनसि मे पञ्चवक्त्र स्त्रिनेत्रः ॥ १२ ॥

की० ॥ त्रैलोक्यस्याखिलजगतः ॥ अधीश्वरोविशिष्टस्वामी ॥ पु० की० ॥ श्रीशिवायास्स्वभक्तकल्याणकर्याः श्रीपार्वत्याः ईशः पतिः तत्सहकृतइत्यर्थः ॥ ११ ॥ अथप्रमोदभरभरितान्तःकरणः ॥ ध्यानान्तरमाह ॥ सर्प्येति ॥ त्रिनेत्रोमार्त्तण्डादि नयनत्रयशोभी ॥ अर्थात् ॥ श्रीशङ्करः ॥ नृत्यन्स्वानन्दनिमग्नत्वात् ॥ नर्त्तनङ्कुर्वन् ॥ अजस्रमविच्छिन्नम् ॥ मेस्वसेवक स्यमम ॥ मनसिवसतु ॥ स्मरणविषयोजायताम् ॥ कीदृशस्त्रिनेत्रः ॥ सर्प्यालङ्काररम्यः भुजगभूषणरमणीयदर्शनः ॥ अल-

ङ्कारस्तुहारादावुपमानाद्यावलङ्कृताविति मेदिनी ॥ पु० की० ॥ श्रुतिचरमवचोमात्रगम्योवेदान्तवचनैकवेद्योऽपि ॥ पुनः ॥ अगम्योनिर्गुणस्वरूपतया ॥ अवाङ्मनसगोचरः ॥ यतोवाचोनिवर्त्तन्ते अप्राप्यमनसासहेतिश्रुतेः ॥ पु० की० ॥ स्वेनानन्देनस्वकीयस्वरूपानन्देन ॥ धन्यः पुण्यवान् ॥ कृतकृत्यइत्यर्थः ॥ धन्यम्पुण्यवतित्रिष्विति मेदिनी ॥ पु० की ॥ त्रिजगतित्रिभुवनेनितरांसर्वदा ॥ सर्वदेवाग्रगण्योऽखिलामराग्रणीः ॥ पु० की० ॥ आकाशे आकाशंवा ॥ उद्भासते ॥ उद्भासयतिवा ॥ सतथोक्तः ॥ अत्युन्नतशरीरोऽतिप्रकाशमानशरीरोवेत्यर्थः ॥ पु० की० स्वजनेषुस्वानन्यभक्तेषु ॥ गुर्वीमहती ॥ दयाकृपा यस्य सतथोक्तः ॥ पु० की० ॥ चण्डन्दुर्जनदुस्सहम् ॥ धामदेहः ॥ गृहंमन्दिरम् ॥ रश्मिस्तेजः ॥ स्थानङ्कैलासाख्यः प्रदेशः ॥ प्रभावोमाहात्म्यंवायस्य सतथोक्तः धामदेहगृहेरश्मौस्थानेजन्मप्रभावयोरिति मेदिनी ॥ पु० की० उरुभिर्बहुभिः ॥ सुरासुरनरादिभिः ॥ गीयतेनानाविधस्तोत्रकदम्बकैः ॥ स्तूयते ॥ सतथोक्तः ॥ पु० की० ॥ श्रीमांस्त्रिवर्गसम्पत्त्यादिसंसेवितः ॥ पु० की० ॥ पञ्चवक्त्रस्स्वेच्छाविग्रहत्वात्सर्वजगत्पालनजागरूकत्वाद्वा ॥ पञ्चसङ्ख्याकवदनः ॥ १२ ॥ अथ च ॥ स्वप्रीत्यनुकूलन्ध्यानान्तरमाह ॥ टङ्कमिति ॥ अहम् ॥ सर्वदासदैव ॥ स्वमनसि ॥ यत्नायत्तत्वात् ॥ स्वकीयेमानसे ॥ विश्वनाथंविश्वनाथनाम्नाप्रसिद्धम् ॥ श्रीकाशीनिवासिनं श्रीशङ्करम् ॥ निदध्येधारयामि ॥ ध्यानविषयंकुर्वेइत्यर्थः ॥ कीदृशंविश्वनाथम् ॥ टङ्कमश्मदारणङ्खनित्रंवा ॥ वर्द्धकिशस्त्रविशेषम् ॥ टङ्कोनीलकपित्थेऽसिकोशेकोपेऽश्मदारणे ॥ मानान्तरे खनित्रेचजङ्घायाण्टङ्कनेऽपिचेति हेमचन्द्रः ॥ शूलन्त्रिशूलम् ॥ कपालम्ब्रह्मदेवशिरोऽस्थि॥कपालोऽस्त्रीशिरोऽस्थिस्स्याद्घ-

॥ ६ ॥

टादेशशाकलेब्रजेइतिमेदिनी ॥ अथ डमरुम् करैश्चतुर्भिर्हस्तैः धारयन्तम् ॥ पु० की० ॥ हसन्तम् ॥ आनन्दमयत्वान्निर्न्निमि त्तहासैकपरायणम् ॥ पु० की० ॥ सालङ्कारंमाणिमयभूषणभरसमलङ्कृतशरीरम् ॥ पु० की० सुरेन्द्रैश्शक्रयमवरुणादिभि- र्देवप्रवरैः ॥ नुतन्तत्तदवसरेसंस्तुतम् ॥ पु० की० ॥ अतिविभवमत्यन्तसमृद्धाखिलब्रह्माण्डैश्वर्यम् ॥ पु० की० ॥ कुम्भिव क्त्रादिभिर्ग्गजाननप्रमृतिभिः पृक्तंसहकृतम् ॥ आदिनाषडाननप्रमथादिग्रहः ॥ पु० की० ॥ हीरक्षीरेन्दुशुभ्रंवज्रदुग्धचन्द्र वदतिगौरशरीरम् ॥ पु० की ॥ तिस्रोदशोनेत्राणियस्यसतथोक्तस्तम् ॥ पु० की० ॥ दिव्येशिल्पिवर्यविश्वकर्म्मनिर्म्मिते ॥

टङ्कं शूल ङ्कपाल ण्डमरु मऽथ करे धारयन्तं हसन्तं सालङ्कारं सुरेन्द्रै र्न्नुत मऽतिविभ व ङ्कुम्भिवक्त्रादिपृक्तम् ॥हीरक्षीरेन्दुशुभ्र न्त्रिदृश मसदृश न्दिव्यपर्य्यङ्कसंस्थ ङ्कोटिब्रह्मा ण्डनाथं स्वमनसि निदधे सर्वदा विश्वनाथम् ॥ १३ ॥

हरिविधिमहेन्द्रादिसुरवरसमर्पिते ॥ पर्यङ्केसिंहासनविशेषे ॥ सम्यक् ॥ स्वस्थचित्ततया ॥ तिष्ठतीतिसतथोक्तस्तम् । पु० की० ॥ कोटिब्रह्माण्डनाथमखिलजगत्स्वामिनम् ॥ १३ ॥ अथमहाप्रभुत्वसम्भृतन्ध्यानान्तरमाह ॥ वामोरुस्थाद्रिकन्य इति ॥ कामजेतात्रिभुवनजयिमनसिजविजयी ॥ अर्थात् । श्रीशङ्करः ॥ मम हृदिध्यानार्हेहृदयावकाशे ॥ वसतुध्यानवि षयोभवतात् ॥ कीदृशः कामजेता ॥ वामोरुस्थाद्रिकन्यः ॥ निर्विकारमनस्कत्वप्रकाशनकृते ॥ वामाङ्कारोपितानुपमला-

वण्यभरविभूषितश्रीपार्वतीकः ॥ पु० की० ॥ त्रिदृक्त्रिनेत्रः ॥ पु० की० ॥ अतिमधुरमतिमिष्टम् ॥ अतएव ॥ स्वान्तहृत् ॥ मानसाकर्षि ॥ यद्रूपम् ॥ स्वभावसौन्दर्य्यम् ॥ तेन ॥ धन्यः पुण्यवान् ॥ द्रष्टृजनपवित्रताजनकः ॥ पु० की० ॥ सम्मुखस्थैः अग्रतस्स्थितैः॥ विकासितवदनैरत्यन्तदुर्लभदर्शनलाभोत्सवोद्रेकात्॥ मन्दस्मितसमलङ्कृतवक्त्रारविन्दैः॥ श्रीनाथाद्यैर्लक्ष्मीपतिमहाविष्णुप्रभृतिभिः ॥ सुरेशैर्विबुधवरैः ॥ ईडितः ॥ वैदिकलौकिकनानाविधस्तोत्रकलापैः ॥ स्तुतः ॥ पु० की० ॥ स्कन्देभास्यादीनांश्रीकार्त्तिकेयगजवदनादीनाम् ॥ यत् ॥ नानाविधम् ॥ स्वेच्छानुरूपम् ॥ बहुविधम् ॥ ललितम् ॥ आत्मीय-

वामोरुस्थाद्रिकन्य स्त्रिदृग्‌ गतिमधुरस्वान्तहृद्रूपधन्यः श्रीनाथाद्यै स्सुरेशै र्विकासित
वदनै रीडित स्सम्मुखस्थैः स्कन्देभास्यादिनानाविधललितकलाकौशलोल्लासिचेता भेत्ता
संसारभीते र्वसतु मम हृदि श्रीप्रदः कामजेता ॥ १४ ॥

॥ १० ॥ त्ववात्सल्येनातिहृदयङ्गमम् ॥ कलाकौशलम्बाललीलानुकूलविविधशिल्पचातुर्य्यम् ॥ तेन ॥ उल्लासि ॥ आनन्दभरसमुल्लसत्-॥ चेताश्चित्तम् ॥ यस्य । सतथोक्तः ॥ पु० की० संसारभीतेर्भक्तजनजन्ममरणादिदुःखस्वरूपसंसृतिभयस्य ॥भेत्ता॥ ॥ १० ॥
कैवल्यमुक्तिप्रदानात् ॥ अपहारकः ॥ पु० की० ॥ श्रीप्रदः ॥ शरीरावस्थानावस्थायाम् ॥ महैश्वर्यप्रदः ॥ भक्तजनभोगमोक्षकारणकृपाश्रयइतियावत् ॥ १४ ॥ अथ [illegible] ॥ व्याप्नोति ॥ शिवयतीतिशिवः ॥ लोकोत्तर

कल्याणकारीश्रीशङ्करः ॥ मेमम । मनस्स्थोध्यानविषयः ॥ स्तात्जायताम् ॥ कीदृशःशिवः ॥ वामार्द्धाङ्कस्थितायाःसव्यार्द्धोत्सङ्गविराजमानायाः ॥ रम्यभूषावृतायाअतिसुन्दरालङ्कारसमलङ्कृतायाः ॥ गिरिवरजनुषः पर्वतराजहिमालयपुत्र्याः ॥ स्कन्धोल्लास्येकवाहुर्वामांसावलम्बिसव्यभुजः ॥ पु० की० ॥ गजवदनस्यमातृवामोरुस्थितस्यश्रीगणपतेः ॥ मुखालोकेऽतिसुन्दरवक्त्रदर्शने ॥ दत्तंनियुक्तम् ॥ एकंवृत्त्यन्तरविरहितम् ॥ चित्तश्चेतोयेन ॥ सतथोक्तः ॥ पु० की० ॥ चञ्चतिदेदीप्यमाने ॥ वैयाघ्रचर्मणिव्याघ्रसम्बन्धिनि ॥अजिने॥ स्थितासमुपविष्टा ॥ रुचिराऽतिदर्शनीया ॥ तनुश्शरीरंयस्यसतथोक्तः ॥पु०की०॥

वामार्द्धाङ्कस्थितताया गिरिवरजनुषो रम्यभूषावृताया स्स्कन्धोल्लास्येकबाहु र्गजवदनमु-
खालोकदत्तैकचित्तः ॥ चञ्चद्वैयाघ्रचर्म्मस्थितरुचिरतनु र्भालबालेन्दुशोभी कोटिब्रह्मा
ण्डरक्षाप्रवणतरमहो मे मनस्थ श्शिव स्स्तात् ॥ १५ ॥

भालेयोबालेन्दुश्शिशुशशी ॥ तेनशोभतेतच्छीलः ॥ पु० की० ॥ कोटिब्रह्माण्डरक्षायाम् ॥ प्रवणतरःप्रोत्कटः ॥ महउत्सवो यस्यसतथोक्तः ॥ महउद्धवउत्सवइत्यमरः ॥ १५ ॥ अथप्रमोदातिशयकृतसम्भावनन्ध्यानान्तरमाह ॥ कण्ठेइति ॥ श्रीमहेशः श्रीशङ्करः ॥ मेमम हृदयात् ॥ सदा ॥ न ॥ सरतु ॥ नापगच्छतु ॥ ध्यानस्थानम् ॥ जायतामित्यर्थः॥ कीदृशश्श्रीमहेशः कण्ठेगले ॥ कालांधूतविषमविषत्वात् ॥ श्यामवर्णः ॥ पु० की० ॥ वपुषिशरीरे ॥ विशालस्समुन्नतःपीनतरश्च ॥ पु० की० ॥

श्री शं० ध्या०

धृतकलस्स्वनिहितसकलाविद्यः ॥ पु० की० ॥ बालचन्द्रेण ॥ उच्चंमसमुन्नतम् ॥ भालंललाटंयस्यसतथोक्तः ॥ भालन्तेजोलला
टयोरितिमेदिनी ॥ पु० की०॥ राजन्तोऽतिसुभगाः ॥ वेतालाभूताधिष्ठितश्शवाः ॥ बालाःप्रेतादिकुमाराः ॥ वेतालानाम्बालाः
वेतालाएवबालावा ॥ येन ॥ सतथोक्तः ॥ पु० की० ॥ कलकलेनदर्शनार्थम् ॥ समागतजनकृतेनकोलाहलेन ॥ बिकलोऽव्याकु-
लहृदयः ॥ पु० की० ॥ प्रकर्षेण ॥ उच्चैर्महत्यः कलाश्चतुःषष्टिसङ्ख्याकाः ॥ शिल्पादिविद्याबिशेषाः ॥ यस्ययस्मिन्वा ॥ सत
थोक्तः ॥ पु० की० ॥ कालस्यापिकालः ॥ सदैकरसइत्यर्थः ॥ पु० की० ॥ ज्वालामालिदेदीप्यमानवह्निशिखाशोभि ॥ त्रिशू

|| ११ ||

कण्ठे कालो विशालो वपुषि धृतकलो बालचन्द्रोच्चभालो राजद्वेताबालः कलकल
विकलः प्रोत्कलः कालकालः ज्वालामालित्रिशूलः पदतलहतिभि श्चालिताम्भोधि
कूलः प्रोल्लासिव्योमकेश स्स्मरतु न हृदयान्मे सदा श्रीमहेशः ॥ १६ ॥

लंयस्यसतथोक्तः ॥ पु० की० ॥ पदतलहतिभिःप्रलयावसरेताण्डवावसरेवा ॥ कृतैः ॥ चरणतलप्रहारैः ॥ चालितानिसमु
न्नताऽऽनतीकृतानि ॥ अम्भोधिकूलानिसमुद्रवेलाः । अब्धितटप्रदेशायेनसतथोक्तः ॥ वेलास्समुद्रकूलानीत्यमरः पु०की० ॥ || ११ ||
प्रोल्लासिसमाधिकप्रकाशमानम् ॥ व्योमाऽऽकाशोयैः ॥ तथाभूताः केशाः कुन्तलाः ॥ यस्यसतथोक्तः ॥१६॥ अथस्वरुच्य
नुकूलन्ध्यानान्तरमाह ॥ ध्येय इति ॥ भवोद्भवः ॥श्रीशङ्करइत्यर्थः॥ भवस्सचासौनिजन्मस ॥ रुद्रेश्रेयसिसंसारेऽइतिहेमचन्द्रः ॥

मन्मनस्स्थः ॥ स्तात् ॥ मद्ध्यानविषयोजायताम् ॥ कीदृशोभवः ॥ अज्ञेयोऽपिनिर्गुणस्वरूपत्वाद्वाङ्मनसागोचरोऽपि ॥ ध्येयः ॥ सगुणस्वरूपत्वेन॥ ध्यातुंयोग्यः ॥ पुनः ॥ अमेयोऽपि ॥ अनन्तमहिमत्वादियत्तयाविरहितोऽपि ॥ हृदयरुचिभरान्मनोऽनुरागातिशयात् ॥ सज्जनैस्स्वभक्त्येकपरायणैस्सत्पुरुषैः ॥ साधुसम्यक् ॥ गेयः स्वरग्रामतालमानादिभिः गानसाधनैः ॥ गातुमर्हः ॥ पु० की० ॥ नोद्दामा ॥ अविश्रृङ्खलचेष्टः ॥ मर्यादापुरुषोत्तमइत्यर्थः नञर्थेननकारेण ॥ सुप्सुपेतिसमासः ॥ पु० की० ॥ शान्तम्भक्तजनमनश्शान्तिविधायि ॥ धामतेजोयस्यसतथोक्तः ॥ शान्तिप्रदनिवासस्थानोवा ॥ गेह देहत्वि-

ध्येयो ऽज्ञेयो ऽप्यऽमेयो हृदयरुचिभरा त्सज्जनै स्साधुगेयो नोद्दामा शान्तधामा श्रुति
नुतगरिमा श्रीसमाक्रान्तनामा । लीनो ऽजस्रं स्वरूपे दधऽदपि सुभगे वीक्षणे द्वे विरूपे
सत्कृष्णैणाजिनस्थ स्सितभसितासित स्स्ता द्भवो मन्मनस्स्थः ॥ १७ ॥

ट्प्रभावाधामानीत्यमरः ॥ पु० की० ॥ श्रुतिनुतगरिमावेदस्तुतगौरवः ॥ पु० की० ॥ श्रीसमाक्रान्तनामा ॥ अतिशोभमानाख्यः ॥पु० की०॥ अजस्रंनिरन्तरम् ॥ स्वरूपेसच्चिदानन्दमये ॥ आत्मरूपे ॥ लीनोमग्नः ॥ पु० की० स्वतन्त्रत्वात्कदाचित् ॥ द्वेविरूपे ॥ विकृतस्वरूपेऽत्यन्तदुर्जनभयङ्करेअपि ॥ सुभगेविशिष्टसौन्दर्ये ॥ वीक्षणेनयने ॥ दधद्दधानः ॥ सन्निदर्षेषम् ॥ यत् कृष्णैणाजिनङ्कृष्णमृगचर्म ॥ तत्र तिष्ठतिसमुपविशतिसतथोक्तः ॥ पु० की० ॥ सितेनातीवगौरेण ॥ भसितेनभस्मना ॥

सितोगौरः ॥ सर्वाङ्गलिप्तभस्मेत्यर्थः सितभसितादर्पसितोवा ॥ सतथोक्तः ॥ १७ ॥ अथध्यानान्तरमाह ॥ चञ्चदिति ॥
अहम् ॥ अनिशंसर्वदा पार्वतीशंश्रीगौरीशम् ॥ श्रीशङ्करम् ॥ सम्भजेसम्यक्सेवे ॥ ध्यानाद्विषयम् ॥ विदधेइतियावत् ॥
कीदृशम्पार्वतीशम् । चञ्चत्प्रकाशमानम् ॥लावण्यंस्वाभाविकंसौन्दर्य्यंयस्यतादृशम्॥ गात्रंशरीरम् ॥ यस्यसतथोक्तस्तम् ॥
पु० की० ॥ सुरदनुजमुनीनान्देवदानवतपस्विनाम् ॥ प्रीतिर्भक्तंः ॥ सेवायास्समच्चार्याश्च ॥ एकपात्रंमुख्याधिकारिणम् ॥
सर्वोत्तमत्वात् ॥ अत्यन्तयोग्यम् ॥ प्रीत्यायासेवा ॥ तस्यावा ॥ एकपात्रम् ॥ पु० की० ॥ हस्तन्यस्तैणशावङ्करधृतमृगशि



चञ्चल्लावण्यगात्रं सुरदनुजमुनिप्रीतिसेवैकपात्रं हस्तन्यस्तैणशाव ञ्जटिल मकुटिलप्रार्थ
नीयस्वभावम् ॥ क्षेत्र म्ब्रह्माऽण्डराशे र्धृतवरडमरुं सूर्य्यचन्द्राग्निनेत्रं श्रीवागीश ङ्कृतीशं
सकरुणमनिशं सम्भजे पार्वतीशम् ॥ १८ ॥

शुम् ॥ पु० की० ॥ जटिलञ्जटावन्तम् ॥ पु० की० ॥ अकुटिलैस्सज्जनैः ॥ प्रार्थनीयःसमाकाङ्क्षणीयः ॥ स्वभावःशीलंयस्य
सतथोक्तस्तम् ॥ अकुटिलोऽतिसरलः ॥ अतएव ॥ प्रार्थनीयः स्वभावोयस्य ॥ तामितिवा ॥ पु० की० ब्रह्माण्डराशेः ॥
क्षेत्रम् ॥ अनन्तब्रह्माण्डोत्पत्तिभूमिम ॥ पु० की० ॥ धृतवरडमरुङ्करस्थोत्तमडमरुवाद्यम् ॥ पु० की० ॥ सूर्यचन्द्राग्नयोने-
त्राणियस्यतम् ॥ पु० की० ॥ श्रीवागीशं श्रीसरस्वतीशम् ॥ पु० की० कृतीशंनिखिलजगदब्रह्मादिविद्वद्वर्यम् ॥ पु०की० ॥

सकरुणन्दीनजनकृपालुम् ॥ १८ ॥ अथध्यानान्तरमाह ॥ विद्युदिति ॥ अहम् ॥ समानंससत्कारातिशयंयथास्यात्तथा ॥ शम्भुंकल्याणैकनिदानम् ॥ श्रीशङ्करम् ॥ नौमिस्तौमि ॥ चित्तैकाग्रतया ॥ ध्यायामीत्यर्थः ॥ कीदृशंशम्भुम् ॥ विद्युद्वत् ॥ विद्योतमानम् ॥ सहजतेजसाप्रकाशमानम् ॥ पु० की० परिहृतवसनन्दिगम्बरम् ॥ पु० की० ॥ भक्तानाम् ॥ रक्षायाम् एकतानमत्यन्तसावधानम् ॥ पु०की० कदाचिदवसरे ॥ स्वान्तप्रोल्लासि स्वस्यस्वभक्तानां वा ॥ हृदयानन्दकारि ॥गानंसा ङ्गोपाङ्गगीतम् ॥ यस्ययसतथोक्तस्तम् ॥ पु०की० तदवसरएव सुललितमातिमनोहरम् ॥ हसनंहास्योयस्यसतथोक्तस्तम् ॥

विद्युद्विद्योतमान म्परिहृतवसन म्भक्तरक्षैकतानं स्वान्तप्रोल्लासिगानं सुललितहसनं सर्व सृष्टे र्निदानम् ॥ ध्यानस्थानं निजानां स्वभवनिरसनं सर्वविद्यानिधान म्प्रेयःपीयूष पानं हृदयविकसनं नौमि शम्भुं समानम् ॥ १९ ॥

पु० की० ॥ सर्वसृष्टेःसकलजगतः निदानमादिकारणम् ॥ पु० की० ॥ निजानांस्वभक्तानाम् ॥ ध्यानस्थानंयथारुचिध्याना स्पदम् पु०की० स्वभवनिरसनंनिजजनसंसारनिरासकारकम् ॥पु० की०॥ सर्वासांविद्यानाम् निधानमाश्रयम् ॥ पु०की०॥ प्रेयोऽतिप्रियम् ॥ पीयूषपानममृतपानंयस्यसतथोक्तस्तम् ॥ पु० की० हृदयस्यविकसनम् येनसतम् स्मरणावसरे ॥ निज-जनाविनोदजनकामित्यर्थः ॥ १९ ॥ अथातिमनोहरन्ध्यानान्तरमाह ॥ कुन्देन्द्विति ॥ अहम् ॥ सन्ततंसर्वदा ॥ मनसि ॥ प-

शुपपितीम्पिनाकिनम् ॥ श्रीशङ्करम् ॥ सन्दधेध्यायामीत्यर्थः ॥ पशुपतिः पिनाकिनिहुताशने इतिहेमचन्द्रः ॥ कीदृशम्पशुपतिम् ॥ कुन्देन्दुक्षीरवत् ॥ गौरमतिशुभ्रवर्णम् ॥ पु० की० ॥ गुरुम् ॥ सर्वेभ्योमहान्तमपि ॥ अगुरुंलघुम् ॥ इतिविरोधः ॥ नास्ति ॥ गुरुर्म्महान् ॥ कोऽपियस्मादितितत्परिहारः ॥ अत्रापिभिन्नक्रमः ॥ यद्वा ॥ अगुरुमपि गुरुम् ॥ पुनः की० ॥ स्वीयभक्तार्त्तेर्निजसेवकजनसांसारिकपीडायाः ॥ चौरोऽपहर्त्तासतथोक्तस्तम् ॥ अर्तिः पीडाधनुष्कोट्योरित्यमरः ॥ पु० की० ॥ ध्यानेस्वस्वरूपचिन्तने ॥ एवैकस्मिन् ॥ सक्तंलग्नम् ॥ चित्तंयस्यसतथोक्तस्तम् ॥ पु० की० ॥ त्रिभुवनविनुतम् ॥ आखिलब्रह्मा

कुन्देन्दुक्षीरगौर ङ्गुरु मगुरु मऽपि स्वीयभक्तार्त्तिचौर न्ध्यानैकासक्ताचित्त न्त्रिभुवनविनुतं
सन्नि जानन्दवित्तम् ॥ उच्चैरुद्भासमान म्प्रवरदरजयिग्रीविकारोचमान ङ्गङ्गाम्भस्सिक्तदेहं
मनसि पशुपतिं सन्ततं सन्दधे ऽहम् ॥ २० ॥

ण्डातिस्तुतम् ॥ पु० की० ॥ सन्नत्युत्तमः ॥ यः ॥ निजानन्दस्स्वस्वरूपानुसन्धानरूपानन्दः ॥ वित्तन्धनंयस्यसतथोक्तस्तम् पु० की० ॥ उच्चैरत्यन्तम् ॥ उद्भासमानंस्वसहजदीप्त्याप्रकाशमानम् ॥ उच्चैरुन्नतमितिपृथक्पदंवा ॥ पु० की० ॥ प्रवरदरजयिनीसुन्दरकम्बुकण्ठविजयोद्धुरा ॥ ग्रीवैवग्रीविका ॥ रेखात्रयशोभीगलप्रदेशः ॥ तया रोचमानन्दीप्यमानम् ॥ गङ्गावाःशिरस्स्थायास्सुरसरितः ॥ अम्भोभिर्निर्म्मलैर्जलैः ॥ सिक्तोदेहोयस्यसतम् ॥ २० ॥ अथशुद्धबुद्धिसंस्कृतान्तरात्मा

॥ १३ ॥ ॥ १३ ॥

ध्यानान्तरमाह ॥ वामे इति ॥ अहमतिशिशुः ॥ शङ्करंसर्वथैवकल्याणविधायिनंश्रीमहादेवम् ॥ अन्तः ॥ अन्तःकरणे स-न्दधेसम्यग्धारयामि ॥ चिन्तयामीतियावत् ॥ कीदृशंशङ्करम् ॥ उपरिगे ॥ उपरिवर्त्तमाने वामेहस्ते ॥ रुचिरमतिदर्शनी-यम् ॥ त्रिशूलम् ॥ अधस्स्थेतदधोवर्त्तमानेहस्ते ॥ आर्यायाः श्रीगिरिजायाः ॥ आर्यादाक्षायिणीचैवगिरिजामेनकात्मजेत्य मरः ॥ पयोदम् ॥ श्रीगुहगणपतिदुग्धदानार्हम्पयोधरञ्च ॥ तथास्थे ॥ उपरिगे ॥ दक्षेऽवामे ॥ तस्मिन् ॥ हस्ते ॥ डमरुञ्च अथ ॥ पूर्वव्यवस्थया ॥ अधोवर्त्तमाने ॥ दक्षेहस्ते ॥ मृगंहरिणञ्च ॥ धारयन्तन्दधानम् ॥ पु० की० ॥ हसन्तम् ॥ मनोमु

वामे हस्तेत्रिशूलं रुचिर मुपरिगे ऽधस्स्थ आर्यापयोद न्दक्षे तस्मिं स्तथास्थे डमरु
मथमृग न्धारयन्तं हसन्तम् ॥ श्रीमन्त न्नागभूषाश्रितमणिकिरणै स्स्तूयमानं सुरेन्द्रै
र्गन्धर्वैर्गीयमानं सनिजसुतनुभि श्शङ्करं सन्दधे ऽन्तः ॥ २१ ॥

दाहासम् ॥ कुर्वन्तम् ॥ पु० की० ॥ नाना ॥ उच्चावचाबहुभेदाः ॥ येसर्पाः ॥ तएव ॥ भूषाः कटककुण्डलादीनिभूषणानि ताः ॥ श्रिताः ॥ येमणयोरत्नानि ॥ द्वितीयाश्रितातीतोतिसमासः ॥ तेषाम् ॥ किरणैर्म्मयूखैः ॥ श्रीमन्तमत्यन्तशोभितम् ॥ पु० की० ॥ निजाआत्मीयाः ॥ याः ॥ सुतनवस्सुन्दर्यः ललनाः ॥ ताभिः ॥ सहवर्तमानैः ॥ सुरेन्द्रैश्शक्रादिभिः ॥ स्तूय मानंस्तुतिविषयीकृतम् ॥ पु० की० ॥ गन्धर्वैः ॥ पूर्वोक्तविशेषणविशिष्टैः ॥ गानकर्मप्रधानैः ॥ देवयोनिविशेषैः ॥ तथागी

यमानम् स्तुतिगर्भगानास्पदीकृतम् ॥ २१ ॥ अथ स्वरुचिरन्ध्यानान्तरमाह ॥ आशेति ॥ शम्भवत्यस्मात्सः शम्भुः ॥ सकल कल्याण हेतुः श्रीमहादेवः ॥ मम ॥ अन्तर्हृदि ॥ आस्ताम् .. समुपविशतु ॥ ध्यानविषयोभवतादितियावत् ॥ कीदृशश्श-म्भुः ॥ आशावस्त्रोऽपिदिगम्बरोऽपि ॥ अनाशआशाशून्यइतिविरोधः ॥ अनाशःकालत्रयाबाध्यः ॥ अभिलाषमात्रविरहितो वेतितदभावः ॥ अतएव ॥ विरोधाभासः ॥ पु० की० ॥ शश्यादिभिः ॥ त्रीक्षणस्त्रिनेत्रः ॥ पु० की० ॥ क्षीणदैन्यः ॥ सर्वथैवपरिपूर्णत्वादन्यदीनताशून्यः ॥ पु० की० ॥ वनेभवांवन्यः ॥ आवासोनिवासस्थानंवा ॥ यस्यसः ॥ तथाभूतोऽपि ॥

आशावस्त्रोऽप्यनाश श्शशिरविशुचिभि स्त्रीक्षणः क्षीणदैन्यो वन्यावासोऽप्य वन्यः
कलिकलितकलारक्षिगण्यो ऽप्यगण्यः ॥ श्रीभागीरथ्युदारप्रवरतरसरद्वीचिचश्चज्जटाक
स्सच्चित्रैणाजिनस्थ स्स्थररुचिरतनु श्शम्भुरन्त र्ममाऽऽस्ताम् ॥ २२ ॥

अवन्यस्तद्विरुद्धः ॥ इतिविरोद्धः ॥ अप्राकृतइतितदभावः ॥ पु० की० ॥ कलिकलितकलारक्षिषु ॥ कलिप्रचलितदुर्व्यापार रक्षणशीलेषु ॥ गण्योऽपि ॥ मुख्यतयाऽग्रगणनीयोऽपि ॥ अगण्यः ॥ वस्तुतोऽवाङ्मनसगोरत्वात्क्वचिदपिगणनाऽनर्हः ॥ विरोधेऽपितदभावः ॥ पु० की० ॥ श्रीभागीरथ्याः श्रीगङ्गायाः ॥ उदारामहत्यः ॥ प्रवरतरादर्शनीयाः ॥ सरन्त्याइतस्ततश्च-लन्त्यः ॥ याः वीचयस्तरङ्गाः ॥ भङ्गस्तरङ्गऊर्मिर्वास्त्रियांवीचिरित्यमरः ॥ ताभिः ॥ चञ्चन्त्योऽतिशोभमानाः जटालग्न

कचाः ॥ यस्यसतथोक्तः ॥ बहुव्रीहौकप् ॥ पु० की० ॥ सन्निदर्शयम् ॥ चित्रमद्भुतम् ॥ किर्मीरंवा ॥ ऐणंमार्गम् ॥ अजिन-
ञ्चर्म ॥ तत्र ॥ तिष्ठतीतिसतथोक्तः ॥ पु० की० ॥ स्थिराऽचञ्चलारुचिराभक्तजनमनोहरा ॥ तनुश्शरीरंयस्यसः ॥ २२ ॥
अथध्यानान्तरमाह ॥ संसाराम्भोधिपोतमिति ॥ अहम् ॥ अनिशमविरतम् ॥ ईशंश्रीशङ्करम् ॥ चेतसि ॥ सन्दधेधारयामि
स्मरामीतियावत् ॥ कीदृशमीशम् ॥ संसाराम्भोधिपोतम् ॥ भक्तानाम् ॥ संसारसमुद्रवहित्रम् ॥ लोकेजहाजइतिप्रसिद्धम्
पोतःशिशौवहित्रेचगृहस्थानेचवाससीतिमेदिनी ॥ जन्ममरणलक्षणसंसारनिवर्त्तकमितियावत् ॥ पु० की० ॥ स्थिरत-

संसाराम्भोधिपोतं स्थिरतरमनसां योगिना न्ध्यागम्यं मायातीतस्वरूप न्त्रिभुवनविषये
सर्वदेवैकभूपम् ॥ एकान्तस्थातिरम्यत्रिदशतरुले चारुपद्मासनस्थश्चञ्चञ्चद्रसमाङ्गराग
न्त्रिनयन मनिशं सन्दधे चेतसी शम् ॥ २३ ॥

रमनसांवशीकृतचेतसाम् ॥ योगिनांयोगनिष्ठानाम् ॥ ध्यानगम्यन्ध्यानैकलब्धस्वरूपम् ॥ पु० की० ॥ यतः ॥ मायातीत-
स्वरूपम् ॥ प्रकृतितत्कार्यसम्पर्कशून्यम् ॥ पु० की० ॥ त्रिभुवनविषयेत्रैलोक्ये ॥ सर्वदेवैकभूपम् ॥ सकलसुराधिपतिम् ॥
पु० की० ॥ एकान्तस्थस्य ॥ अतिरम्यस्यातिदर्शनीयस्य ॥ त्रिदशतरोः ॥ अतिप्रसिद्धत्वात् ॥ कल्पवृक्षस्य ॥ तलेऽधः प्रदे-
शे ॥ चारुसुन्दरसन्निवेशम् ॥ उक्तस्वरूपम् ॥ यत ॥ पद्मासनम् ॥ तेन ॥ तिष्ठतीतितम् ॥ पु० की० ॥ चञ्चच्चन्द्रसमाङ्गरा

गमातिप्रकाशमानकन्दर्पदग्धदेहभसितविलेपनोद्धूलितसर्वाङ्गम् ॥ पु० की० ॥ त्रिनयनन्त्रिनेत्रम् ॥ २३ ॥ अथ निर्गुणसगुण स्वरूपसङ्ग्रहेणध्यानान्तरमाह ॥ पूर्णानन्दमिति ॥ मुक्तिरेवसम्पात्तिरैश्वर्यम् ॥ तस्याहेतोस्तदर्थम ॥ मुक्तिसम्पत्त्योः ॥ मोक्षभोगयोर्वाहेतोः ॥ सर्वदासर्वास्ववस्थासु ॥ सुतरांसम्यक् ॥ इहास्मिन् ॥ अन्तः ॥ हृदि ॥ अहम् ॥ गौरीशंश्रीपार्वती पतिम् ॥ महेशम् ॥ गौरीसहकृतम् ॥ ईशंशङ्करंवा ॥ दधेधारयामि ॥ संस्मरामीत्यर्थः ॥ कीदृशङ्गौरीशम् ॥ पूर्णोऽविकलः आनन्दः ॥ स्वस्वरूपावबोधलक्षणंसुखम् ॥ यस्ययस्मिन्वातम् ॥ अखण्डानन्दस्वरूपंवा ॥ पु० की० ॥ यतः ॥ निरीहम् ॥

पूर्णानन्दं निरीह म्प्रकृतिपर मजंनिर्गुणं शक्तिपात्र म्पूर्णेन्दुद्योतिगात्रं स्वपदवितरणे शक्त मारक्तभक्तम् ॥ सक्तं स्वेषा ज्जनानां समवनविषये मन्दचेष्टाविरक्त ङ्गौरीशं सर्वदा न्तर्दध इहसुतरां मुक्तिसम्पत्तिहेतोः ॥ २४ ॥

सङ्कल्पादिनानाविधप्राकृतचेष्टाविरहितम् ॥ पु० की० यतः ॥ प्रकृतिपरम् ॥ मायातीतम् ॥ पु० की० ॥ अजञ्जन्मरहितम् ॥ पु० की० ॥ यतः ॥ निर्गुणम् ॥ गुणत्रयसंसर्गशून्यम् ॥ सर्वदैकरसम् ॥ पु० की० ॥ शक्तिपात्रम् ॥ सगुणावस्थायाम् ॥ ब्रह्मादिरूपेण ॥ जगदुत्पादनादिप्रभुत्वाश्रयम् ॥ पु० की० ॥ पूर्णेन्दुद्योतिगात्रम् ॥ शारदराकासुधांशुप्रकाशमानशरीरम् ॥ पु० की० ॥ स्वपदवितरणे ॥ निजभक्तजनेभ्यः ॥ कैलासाख्यात्मस्थानदाने ॥ शक्तंसमर्थम् ॥ पदंव्यवसितित्राणस्थानल-

क्ष्माङ्घ्रिवस्तुष्वित्यमरः ॥ पु० की० ॥ अतएव ॥ आरक्ताअत्यन्ता नुरागसंस्कृतमनस्काः ॥ भक्तास्सेवकजनाः ॥ यस्य यस्मिन्वा ॥ तम् ॥ पु० की० ॥ यतः स्वेषामात्मीयानाम् ॥ जनानाम् ॥ समवनविषये सर्वेभ्यः ॥ उपद्रवेभ्यः ॥ संरक्षणप्रकारे सक्तंलग्नमानसम् ॥ पु० की० ॥ मन्दासु ॥ सर्वथैवनिषिद्धत्वादनादरणीयासु ॥ चेष्टासुदुराचरणेषु ॥ विरक्तं महोदासीनम् ॥ २४ ॥ अथात्यन्ताद्भुतन्ध्यानान्तरमाह ॥ पृष्ठेति ॥ महेशः ॥ मेमम ॥ हृदिहृदयस्थले ॥ स्तान्द्भवतु ॥ सर्वदैव तिष्ठात्वित्यर्थः ॥ कीदृशोमहेशः ॥ त्रस्तम्भीतम् ॥ हैयङ्गवीनंसद्योगोदोहोद्भतम् ॥ घृतम् ॥ नवनीतमितियावत् यस्मात्तत्र ॥

पृष्ठाभ्यर्णस्थचञ्चद्वृषवरककुदे त्रस्तहैयङ्गवीने वृत्ताकारे ऽत्युदारे रजतशिखरिभे सन्निषण्णैकबाहुः ॥ श्रीगङ्गाम्भःकणार्द्रो गिरिवरतनुजा चारुदृग्दत्तदृष्टि र्विश्वेषां सृष्टिरक्षाप्रविलयकुशलो मे हृदि स्ता न्महेशः ॥ २५ ॥

ततोऽप्यातिमसृणेइतियावत् ॥ वृत्ताकारेऽत्यन्तवर्त्तुले ॥ अत्युदारेऽतिविशाले ॥ रजतशिखरिभे ॥ अतिचमत्कृतिविशिष्टत्वादतिशुभ्रत्वाच्च ॥ रजतपर्वतसदृशे ॥ पृष्ठाभ्यर्णस्थः पृष्ठप्रदेशनिकटवर्त्ती ॥ चञ्चन्नतिदीप्यमानोयोवृषस्स्ववाहनम्वृषभः ॥ तस्यवरंश्रेष्ठम् ॥ यत्ककुदंसमध्यवर्त्ती ॥ स्थूलोमांसपिण्डविशेषः ॥ तत्र ॥ वृषवरइतिवा ॥ तत्तुहैयङ्गवीनंयत् ह्योगोदोहोद्भवङ्घृतमिति ॥ प्राधान्येराजलिङ्गेचवृषाङ्केककुदोऽस्त्रियामितिचामरः ॥ संनिषण्णस्सम्यक्संस्थितः ॥ एकोदक्षिणोवामोवा ॥

बाहुर्भुजः ॥ यस्यसः ॥ पु० की० ॥ श्रीगङ्गायाश्शिरस्स्थायाः ॥ सुरसरितः ॥ अम्भःकणैर्जलबिन्दुभिः ॥ आर्द्रः क्लिन्नः ॥ सिक्तइत्यर्थः पु० की० ॥ गिरिवरतनुजायाः ॥ वामपार्श्वस्थायाः ॥ श्रीपार्वत्याः ॥ चारुदृशोरतिसुन्दरनेत्रयोः ॥ दत्तानिहिता ॥ दृष्टिर्येनसः ॥ पु० की० ॥ विश्वेषाञ्जगताम् ॥ सृष्टिरक्षाप्रविलयेषु ॥ ब्रह्मादिरूपेण ॥ कुशलः समर्थः ॥ २५ ॥ अथात्यन्ताद्भुतन्ध्यानान्तरमाह ॥ श्रीनाथेति ॥ अहम् ॥ भक्तिभावात् ॥ नतुकयाचित्कामनया॥गिरौकैलासाख्येनिजेपर्वते ॥ शेते योगनिद्रामनुभवतीतिगिरिशस्तम् ॥ हृदिध्यानार्हे हृदयावकाशे ॥ सन्दधे ॥ सम्यक् ॥ मनोनिरोधपूर्वकम् ॥ धारयामि ॥

श्रीनाथब्रह्मदेवप्रभृतिसुरवरै स्सप्रियैः प्रेमपूर्णै र्नम्रांसै र्मीलिताक्षै स्सितकरकमलै स्संस्तुतं सप्रमोदम् ॥ सद्भूत्युद्धूलिताङ्ग ञटिल मतिलसद्भालचन्द्र न्त्रिनेत्रं श्रीगङ्गाशोभिशीर्षं हृदिगिरिश महं सन्दधे भक्तिभावात् ॥ २६ ॥

संस्मरामीतियावत् ॥ कीदृशङ्गिरिशम् ॥ सप्रियैः ॥ प्रियाभिर्ब्रह्माण्यादिभिस्स्वाङ्गनाभिस्सहवर्त्तमानैः ॥ प्रेमपूर्णैर्भक्तिरसेनसंस्कृतमनस्कैः ॥ नम्रांसैःकिञ्चिन्नतस्कन्धप्रदेशैः ॥ मीलिताक्षैः ॥ तत्तेजसोऽतिदुस्सहत्वात् ॥ मुकुलितनयनैः ॥ सिता निबद्धानि ॥ करकमलानिहस्तपङ्कजानि ॥ यैर्येषांवा ॥ तैः बद्धेसन्दानितम्मू तमुद्दितंसन्दितंसितमित्यमरः श्रीनाथोलक्ष्मीपतिर्महाविष्णुः ॥ ब्रह्मदेवः ॥ सकलब्रह्माण्डजनकः ॥ श्रीचतुराननः ॥ तौप्रभृती ॥ आदी ॥ येषाम् ॥ सुरवराणाम् ॥ इ

न्द्रादीनाम् तैः ॥ सप्रमोदं सहर्षम् ॥ संस्तुतम् ॥ पु० की० ॥ सत्यामहोत्तमया ॥ भूत्याभस्मना ॥ उद्धूलितं रूषितं अङ्गं सकलंशरीरंयस्यसतम् ॥ पु० की० जटिलज्जटावन्तम् ॥ पु की० ॥ भालेचन्द्रोभालचन्द्रः ॥ अतिलसञ्ज्ञातिप्रकाशमानः ॥ भालचन्द्रोयस्यसतम् अतिलसतिभालेचन्द्रोयस्य तमितिवा ॥ पु० की० ॥ त्रिनेत्रम् ॥ सूर्यादिनयनत्रयशोभितम् ॥ पु० की० ॥ श्रीगङ्गाशोभिशीर्षे सुरधुनिविराजमानमूर्द्धानम् ॥ २६ ॥ अथातिरुचिरन्ध्यानान्तरमाह ॥ द्वन्द्वातीतमिति ॥ अहम् ॥ ईशंश्रीमहादेवम् ॥ ईशःप्रभौमहादेवइतिमेदिनी ॥ भजेसेवे ॥ ध्यानादिनापूजयामीतियावत् ॥ कीदृशमीशम् ॥ द्वन्द्वातीतम्

द्वन्द्वातीत म्परीतं मुनिवरनिकरै र्नन्दिभृङ्ग्यादिवन्द्य ङ्कैलासोच्चैर्म्महोक्षं मणिललितगलं सम्य गारुह्य हृष्टम् ॥ सार्द्धं स्वाभि स्सखीभिर्द्धरवरजनुषालोकमात्रोपगीत म्प्रच्छन्नं संहसन्त न्त्रिजगति सुतरां सन्तमीश म्भजे ऽहम् ॥ २७ ॥

अप्राकृतत्वाच्छीतोष्मादिदुःखविरहितम् ॥पु०की०॥मुनिवरनिकरैरत्यन्तसंसारोपरतमहर्षिसमूहैस्समलङ्कृतम् ॥पु०की० ॥ नन्दिभृङ्ग्यादिभिः ॥ वन्द्यंवन्दनीयम् ॥ पु०की० ॥ कैलासवदुच्चैरुन्नतम् ॥ मणिभिः कण्ठभूषणखचितैः॥महर्घैर्नानाविधैरत्नैः ललितोऽतिरमणीयः॥गलःकण्ठोयस्यसतम्॥सर्वालङ्कारोपलक्षणमेतत् ॥महोक्षंमहावृषभम्॥स्ववाहनम् आरुह्यसमधिष्ठाय ॥ हृष्टम्प्रसन्नम् ॥ पु० की० ॥ स्वाभिर्निजाभिः ॥ जयाविजयादिभिः ॥ सखीभिः ॥ समवयस्काभिरालीभिः ॥ सार्द्धंसह ॥

लोकमात्रासकललोकजनन्या ॥ धरवरजनुषापर्वतराजहिमालयपुत्र्या ॥ श्रीगौर्या ॥ उपगीतंनानाविधस्तुतिगर्भमनोहारिगी-
तैस्सम्भावितम् ॥ पु० की० ॥ अतएव ॥ प्रच्छन्नमलक्षितंयथास्यात्तथा ॥ हसन्तम् ॥ अतीबमन्दस्मितशोभिनमितिया-
वत् ॥ पु० की० ॥ त्रिजगतित्रिभुवने ॥ सुतरामत्यन्तम् ॥ सन्तंश्रेष्ठम् ॥ पूज्यतममित्यर्थः ॥ २७ ॥ अथचातीवमनः प्रिय-
न्ध्यानान्तरमाह ॥ वामइति ॥ अहम् ॥शङ्करम्॥ संस्मरामिध्यायामि ॥ कीदृशंशङ्करम् ॥ वामेहस्ते॥ दिव्यभूषावृताङ्ग्या अ-
लौकिकभूषणसमलङ्कृतसर्वशरीरायाः ॥ मन्दमन्दंशनैश्शनैः ॥ गच्छन्त्याः भुवनजयिनीसकललोकातिशायिनी ॥ रुचिर्दी

वामे हस्ते गृहीत्वा मृदु करकमल न्दिव्यभूषावृताङ्ग्या गच्छन्त्या मन्दमन्द म्भुवनजयि-
रुचेः श्रीगिरीन्द्रात्मजायाः ॥ कैलासे दिव्यशाखिप्रवरतरलतारत्नभित्त्यादिरम्ये सानन्दं
सञ्चरन्तं विकसितवदनं शङ्करं संस्मरामि ॥ २८ ॥

प्तिर्यस्यास्तस्याः ॥ स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयइत्यमरः ॥ श्रीगिरीन्द्रात्मजायाः श्रीगिरिराजकन्यायाः ॥
स्वधर्मपत्न्याः ॥ गौर्याः मृदु ॥ कोमलम् ॥ सुस्पर्शमित्यर्थः ॥ करकमलम् ॥ दक्षहस्तारविन्दम् ॥ गृहीत्वाधृत्वा ॥ दिव्य-
शाखिभिः कल्पवृक्षादिभिस्स्वर्गतरुभिः ॥ प्रवरतराभिः ॥ पत्रपुष्पफलसमृद्ध्या॥अत्युत्तमाभिः ॥ लताभिर्नानाविधाभिर्वल्लि-
भिः ॥ रत्नाभित्त्यादिभिर्विविध[illegible] ॥ अथ[illegible]लक्षणम् ॥ भित्तिपदन्तुशिखर[illegible]धित्यका

देरुपलक्षणम् ॥ रम्येरमणीये ॥ चङ्क्रमणार्हेइत्यर्थः ॥ कैलासेकैलासनामके ॥ स्वनिवासपर्वते ॥ सानन्दंसप्रमोदम् ॥ स-ञ्चरन्तम् ॥ सम्यग्यथारुचि..चरन्तङ्गच्छन्तम्॥पु०की०॥ अतएव॥विकसितवदनंहर्षविकासिमुखसरसिजम्॥२८॥ अथ मोक्ष भोगविधायिध्यानान्तरमाह ॥निरिति॥ शैलजजायाः॥ श्रीपार्वत्याः ॥ भर्त्रेस्वामिने: ॥ श्रीशङ्कराय अविकटमविकरालम्॥अति सौम्यमित्यर्थः ॥साधु॥चाञ्चल्यादिदोषशून्यम्॥सम्यग्वाचेतोमनः॥ अर्पयामि॥विकटावज्रत्वा राह्या॥न्त्रिषुरुविकरालयोरिति मेदिनी॥किङ्कृत्वाकपटन्दम्भम्॥नितान्तमत्यन्तम् ॥दूरे॥ हित्वापरित्यज्य॥कीदृशाय श्रीशैलजायाभर्त्रे ॥ निर्वैरायसकलजग

निर्वैरायो रुधाम्ने जगदधिपतये सर्वदेवार्च्चिताय स्वज्ञानानन्ददात्रे हृतनिजविपदे सन्ततं श्रीविधात्रे ॥ भर्त्रे श्रीशैलजाया भवविकलहृदा न्दुःखदारिद्र्यहन्त्रे हित्वा दूरे नितान्त ङ्कपट मविकटं साधु चेतो ऽर्पयामि ॥ २९ ॥

त्कल्याणकारिणे॥पु०की०॥अतएव॥उरुधाम्नेमहाप्रभावाय॥ महातेजसेवा ॥धामदेहगृहेरश्मौस्थानेजन्मप्रभावयोरितिमेदिना ॥पु०की०॥अतएव॥ जगदधिपतये ॥ सर्वेश्वराय ॥ पु०की०॥अतएव ॥ सर्वदेवार्च्चितायसकलामरसेविताय ॥ पु० की० ॥ स्वेभ्योनिजेभ्यः ॥ भक्तेभ्यः ॥ ज्ञानानन्ददात्रेज्ञानोद्भूतसुखदात्रे ॥ स्वज्ञानेनाऽऽत्मबोधेन ॥ यः ॥ आनन्दस्तद्दात्रेवा । स्वज्ञानाभिन्नोयः ॥ आनन्दः ॥ [illegible] ॥ तद्दात्रेवा ॥ पु० की० ॥ हृतानाशिता ॥ निजानामा-

त्मायामाम् ॥ भक्तानाम् ॥ विपदस्तत्कालसमागताः ॥ आपदेयेन ॥ तस्मै ॥ पु० की० ।. सन्ततमविच्छिन्नम् ॥ यथातथा ॥ श्रीविधात्रेत्रिवर्गसम्पत्कर्त्रे ॥ पु० की० ॥ भवेसंसारे विकलम् ॥ नानोपद्रवानुभवात् ॥ अस्वस्थम् ।. हृत् हर यम् ॥ येषान्तेषाम् ॥ जनानाम् ॥ समर्च्चनसमसमयमेव ॥ दुःखान्याध्यात्मिकादीनि ॥ दारिद्र्यंचिनैववैराग्यमाकिञ्चनत्वम् तेषाम् ॥ हन्त्रेनिवारकाय ॥ २९ ॥ अथातिरमणीयन्ध्यानान्तरमाह ॥ पर्शुमिति ॥ अहम् ॥ कमपिसर्वदेवंसर्वपूज्यम् ॥ विशे षणमहिम्ना ॥ श्रीशङ्करम् ॥ सर्वदा ॥ महर्निशम् ॥ हृदिध्यानार्हे ॥ हृदयावकाशे ॥ दधेधारयामि ॥ ध्यानविषयम् ,. विद-

पर्शुक्कुण्डा म्त्रिशूल न्दर मऽभयवरौ श्रृङ्गकञ्जैणचापा न्हस्ताब्जै र्द्धारयन्तं सितकर मळिकेऽप्यक्षमद्वैतपक्षम् ॥ स्वं रूप ञ्चिन्तयन्तं रहसि निरुपमं योगमार्गानुकूलं संसारोद्धारमूलङ्क मपि हृदि दधे सर्वदा सर्वदेवम् ॥ ३० ॥

धे इत्यर्थः ॥ कीदृशंसर्वदेवम् ॥ पर्शुम्परश्वधापरपर्यायंशस्त्रविशेषम् ॥ कुठारस्तु ॥ पर्शुः परश्वधौ ॥ परश्वधस्स्वधितिश्चे तिहेमचन्द्रः॥परशुःपर्शुरित्यपीतित्रिकाण्डशेषः॥परशुःपर्शुनासहेतिशब्दप्रभेदः ॥ स्यात्पर्शुःपरशूरपीतिद्विरूपः॥घण्टांवाद्य- विशेषम् त्रिशूलंत्रिशिखम् ॥दरंशङ्खम् ॥ अभयञ्चवरञ्चतौ ॥ अभयमुद्रांवरमुद्राञ्चेत्यर्थः ॥ शृङ्गकञ्जैणचापान् ।मृगविषा णविकचकमलम्हरिणधनूंषि ॥ हस्ताब्जैः ॥ ... ॥ पु० की० ॥ अलिके

ललाटे। सितकरम् शशिनम्। धारयन्तम्। पु० की०। त्र्यक्षन्त्रिनयनम्। पु० की०। नास्ति द्वैतम्भेददर्शनम्। यत्र तथाभूतः। पक्षस्सहायः। चित्सालम्बो यस्य तम्। पक्षोमासार्द्धके पार्श्वगृहेसाध्यविरोधयोः केशादेः परितोवृन्दे बलेसखिसहाययोः। चुल्लीरन्ध्रेपतत्रेचराजकुञ्जरपार्श्वयोरितिमेदिनी। पु० की०। रहसि निर्जने प्रदेशे। योगमार्ग्गानुकूलम् योगपथाविरुद्धम्। योगशास्त्रनिर्दिष्टस्वरूपनिरालम्बसमाधिसिद्धम्। अतएव। निरुपमम् स्वसदृशान्तरशून्यम्। स्वंस्वकीयम् रूपम्। उपनिषदेकवेद्यम्। सच्चिदानन्दात्मकम्। स्वरूपम्। चिन्तयन्तम्। स्मृतिविषयम्। कुर्वन्तम्। पु० की०। संसारोद्धाराय। निजजनजन्ममरणदुःखनिरासाय। मूलमाद्यम्। प्रधानमितियावत्। मूलमाद्येशिफाभयोरित्यमरः॥ ३०॥ अथातिविचित्रन्ध्यानान्तरमाह। संसारेति। ऐश्वर्यवत्या। जगन्मातृत्वात्। लोकोत्तरैश्वर्यविशिष्टया पार्वत्या। पर्वतराजहिमालयात्मजया श्रीगौर्या। तनुजनुषा। आत्मजेन। गुहेन गणपतिना वा। सहच। गौरीगणेशसमलङ्कृतइत्यर्थः। महेशः। श्रीशङ्करः। मे मम। हृदि हृदयावकाशे। स्तात् ध्यानास्पदम्भूयादित्यर्थः। कीदृशो महेशः। संसारएव। अपारोऽनन्तः। वार्द्धिस्समुद्रः। तस्य। क्षयाय नाशाय। ये विविधा नानाविधाः। विधयः प्रकाराः। तेषु। प्रोल्लसन्सोत्साहमरः। सन्। सकलहितसाधनत्वादत्युत्तमः। विचारः परामर्शः। यस्य स तथोक्तः। सर्वहितचिन्तकइतियावत्। पु० की०। सन्तताभिरविच्छिन्नाभिरतिविस्तृताभिर्वा। धृतवरतनुभिरङ्गी कृतोत्तमशरी-

राभिः। मूर्त्ताभिरितियावत्। सर्वाभिर्न्निखिलाभिः। सिद्धिभिरणिमादिभिः सेव्यमानः। परिचर्यार्थंसमाश्रियमाणः। पु० की० ! इन्द्राद्यैः। नन्दिमुख्यैर्नन्दिप्रभृतिभिः। मुनिभिरुपनिषदर्थमननशीलैस्तपोधनैर्वनैकनिवासप्रियैर्म्महर्षिभिश्च। अभिनुतस्सर्वतस्स्तुतः। पु० की०। अप्सरोभिः। भक्तिभरात्। नाकाद्दर्शनार्थमागताभिः। नाकाङ्गनाभिः। गीयमानो-



गानेनसम्भाव्यमानः ॥ ३१ ॥ अथातिमनोनुरागास्पदन्ध्यानान्तरमाह। वाराणस्यामिति। अहम्। विश्वनाथम्। विश्व-

संसारापारवार्द्धिक्षयविविधविधिप्रोल्लसत्सद्विचार स्सर्व्वाभि स्सन्तताभि र्धृतवरतनुभि स्सिद्धिभिस्से-
व्यमानः ॥ इन्द्राद्यै र्न्नन्दिमुख्यै र्मुनिभि रऽभिनुतो गीयमानो ऽप्सरोभिः पार्वत्यैश्वर्य्यवत्या सह तनु-
जनुषा मे हृदि स्ता न्महेशः ॥ ३१ ॥



नाथनाम्नाप्रसिद्धम्। श्रीशङ्करम्। भजेसेवे। ध्यानेनसम्भावयामीतियावत्। कीदृशंविश्वनाथम्। निजगिरिवरतः कै-लासात्। परस्याम् कैलासंहित्वा। अत्रैवसदैव। निवासात्। अत्युत्कृष्टायाम्। निर्झरैरिन्द्रादिभिर्देवैः। आकाङ्क्षिता-



याम्। कैवल्यमुक्तिलाभार्थम्। सदैववाञ्छितायाम्। यतः कैवल्यैकप्रदात्र्याम्। संसारदुःखनिवर्त्तिकायाम्। अतएव। ऋषिभिर्मन्त्रस्रष्टृभिः। मुनिभिरात्मचिन्तकैर्मुमुक्षुभिः। यतिभिर्निर्ज्जितेन्द्रियैस्संसारोपरतैस्तपस्विभिश्च सन्न्यासिभिश्च-

वा। येनिर्जितेन्द्रियग्रामायतिनोयतयश्चतइत्यमरः। भक्त्या। संसेवितायाम्। स्वस्यामात्मीयायाम्। सद्राजधान्याम्। श्रीमत्कैलासपरित्यागपूर्वकम्। अत्रनिवासात्। अत्युत्तमायाम्। स्वप्रधाननगर्याम्। प्रधाननगरीराज्ञां राजधानीति-कथ्यतइतिशब्दार्णवे। वाराणस्यांश्रीकाश्याम्। सगुरुरुचिभरंसमहानुरागातिशयम्। यथातथा। लिङ्गरूपेण। सन्तं-वर्त्तमानम्। पु० क्री०। सदयंयथातथा। असुमतःकीटपतङ्गादीन्प्राणिनः मुक्तिभाजोजन्ममरणविरहितान्। कुर्वन्तंवि-

वाराणस्या म्परस्यां निजगिरिवरतो निर्ज्जराऽऽकाङ्क्षिताया ङ्कैवल्यैकप्रदात्र्या मृषिमुनियतिभि र्भक्तिसंसेवि-
तायाम् ॥ स्वस्यां सद्राजधान्यां सगुरुरुचिभरं लिङ्गरूपेण सन्त ङ्कुर्वन्तं मुक्तिभाज स्सदय मसुमतो विश्वनाथ-
म्भजेऽहम् ॥ ३२ ॥

दधतम् ॥ ३२ ॥ अथध्यानान्तरमाह। नानेति। सर्वदैवाविच्छिन्नमेव। गिरिशंश्रीशङ्करम्। हृदि। अहम्। दधे। कीदृशङ्गिरिशम्। सुरूपंशोभनस्वभावसौन्दर्य्यैः। नानारूपैः। तत्तत्कालतत्तत्कार्यसाधकैः। नानाकारैः। अनिशंनि-रन्तरम्। त्रिभुवनम्। पालयन्तंरक्षन्तम्। रूपंस्वभावसौन्दर्येनालोकेपशुवृन्दयोः। ग्रन्थावृत्तौनाटकादावाकारश्लोक-योरपीतिमेदिनी। पु० क्री०। जलदलकुसुमैः। जलेन। बिल्वपत्रैः। पुष्पैश्च। अर्च्चनेन। प्रसन्नम्। सन्तुष्टम्। पु०क्री०।

अतएव। भक्तान्स्वसेवकान्। भोगान्। स्रक्चन्दनादीप्सितपदार्थलाभसुखानि। भोगस्तुराज्यवेश्याभृतौसुखे। धने हिकायफणयोः पालनाभ्यवहारयोरितिहेमचन्द्रः। मुक्तिंमोक्षञ्चनयन्तम्प्रापयन्तम्। निजजनभोगमोक्षप्रदातारमित्यर्थः। पु० की०। पूर्णैश्वर्यप्रकाशेननिजाऽविकलमाहात्म्यविस्तारेण। प्रवलितभुवनम्परिपूरितजगत्त्रयम्। पु० की०। शासनातीवभीमम्। निग्रहानुग्रहसामर्थ्यातिदुस्सहतेजस्कम्। पु० की०। भीत्याभयेन। हीनम्। अकुतोभयमितियावत्।



नानारूपैस्सुरूपैस्त्रिभुवनमनिशम्पालयन्तं नयन्तम्भक्तान्भोगांश्च मुक्तिं जलदलकुसुमैरर्चनेन प्रसन्नम्॥ पूर्णैश्वर्यप्रकाशप्रवलितभुवनंशासनातीवभीमम्भीत्या हीनं नदीनं हृदि गिरिश मऽहंसन्दधे सर्वदैव॥ ३३ ॥

पु० की०। दीनोनभवतीतिनदीनस्तम्। नञर्थेननकारेण। सुप्सुपेतिसमासः नद्याः श्रीगङ्गायाः इनंस्वामिनंवा॥ ३३॥ अथातिमहिम्नासंस्कृतन्ध्यानान्तरमाह। सुस्फीतामिति। सदासन्ततम्। तम्। विश्वनाथंविश्वनाथनाम्नाप्रसिद्धम्। श्रीशङ्करम्। अहम्। हृदिदध्येध्यायामि। कीदृशंविश्वनाथम्। सुस्फीतामत्यन्तपुष्टाम्। सकलजगद्व्यापिनीमितियावत्। देवगीतामखिलविबुधसम्भाविताम्। समजगदजितांसकललोकातिशायिनीम्। संसितामतिशुभ्राम् यस्यकीर्त्तिंयशः।

स्वरपरिचयतः । षड्जादिस्वरसप्तकातिपरिशीलनात् । रक्तकण्ठोमधुररवाश्रितगलः । सुकण्ठःकम्बुविजयिग्रीवः । भक्तोभक्तिसंस्कृतमनस्कोजनः । सुभक्त्या । गायन्गानविधया । ख्यापयन् । विपिनवसतिभिरेकान्तनिवासप्रियैः । योगमार्गात्यभिज्ञैः । हठयोगशास्त्रातिपरिशीलनात् । तन्मार्गनिष्णातैः । विज्ञैर्विद्वद्वरैः आकाङ्क्षणीयाम् । नत्वधिगताम् । अग्रयांसकलसिद्धिप्रशस्ताम् । सिद्धिम् । अर्थात् । कैवल्यमुक्तिम् । सद्योऽस्मिन्नेवजन्मनि । नतुजन्मान्तरेषु । व्रजति-

सुस्फीता न्देवगीतां समजगदजितां संसितां यस्य कीर्त्तिं ह्याय न्भक्त स्सुभक्त्या स्वरपरि चयतो रक्तकण्ठ स्सुकण्ठः ॥ सद्य स्संसिद्धि मग्र्यां विपिनवसतिभि र्योगमार्गाऽत्यभिज्ञै र्विज्ञै राकाङ्क्षणीयां व्रजति

हृदि दधे विश्वनाथं सदा तम् ॥ ३४ ॥

प्राप्नोति । जीवन्मुक्तोभवतीतियावत् ॥ ३४ ॥ अथातिचित्रन्ध्यानान्तरमाह । वामेइति । अहम् । प्रमोदात् । भक्तिभरसम्भृतानुरागसम्पत्त्या । ईशंश्रीशङ्करम् । सततमनारतम् । हृदिधारयामिध्यायामि । कीदृशमीशम् । वामेऽङ्गेशरीरवामार्द्धे । त्रिभुवनजननींनिखिललोकमातरम् । चारुभूषावृत्ताङ्गीन्दिव्यालङ्कारसमलङ्कृतार्द्धशरीराम् । शैलपुत्रींगिरिराजतनूजांश्रीगौरीम् । दधतन्धारयन्तम् । पु० की० । अथ । सार्द्धैकनेत्र । दक्षेऽङ्के । देहदक्षार्द्धे मृगंहरिणम् । सत् ।

उत्तमम्भस्म । मार्ग्गंमृगसम्बन्धि । सत् । निर्दोषम् । चर्म्माऽजिनञ्च । दधतम् । पु० की० । त्रिदशतरुतलेकल्पवृक्षा-
धस्स्थले । श्रीमत्पद्मासनस्थमुक्तलक्षणसुभगपद्मासनस्थम् । पु० की० । स्वर्गिवारार्च्चिताङ्घ्रिन्देवसमूहपूजितपादम् ।
पु० की० । यतः । ब्रह्माण्डस्य । सकललोकस्य अधीशम्प्रभुम् ॥ ३५ ॥ अथार्ज्जुनवरदानकृतेधृतकिराताकृतेः श्रीशङ्क-
रस्यध्यानान्तरमाह । पुष्पेति । चारुगत्यामनोहारिगमनया । पार्वत्याधृतकिरातीविग्रहयागौर्य्या । सह । सर्वदा ।



॥ २१ ॥

वामेऽङ्के शैलपुत्री न्त्रिभुवनजननी ञ्चारुभूषावृताङ्गी न्दक्षे सार्द्धैकनेत्रे दधत मऽथमृग म्भस्म स च्चर्म्म-
मार्ग्गम् ॥ श्रीमत्पद्मासनस्थ न्त्रिदशतरुतले स्वर्गिवारार्च्चिताङ्घ्रि म्ब्रह्माण्डाधीश मीशं हृदि सतत मऽहं न्धार-
यामि प्रमोदात् ॥ ३५ ॥

शर्वंश्रीशङ्करम् साधुसम्यक् । हृदिनिदधेधारयामि । कीदृशंशर्वम् । पुष्पैर्विकसितैः । कुसुमैः । अञ्चन्तीभिश्शोभमाना-
भिः । दिव्याभिरलौकिकाभिः । वल्लीभिर्लताभिः । घटितंरचितम् । यत् । मुकुटङ्किरीटम् । तेन भ्राजिराजमानम् ।
भालंललाटंयस्यतम् । भालन्तेजोललाटयोरितिमेदिनी । पु० की० । विशालंमहाकायम् । पु० की० । यद्वा । विशालंम- ॥ २१ ॥
हान्तम् । सज्यमारोपितमौर्वीकम् । मौर्वीज्याशिञ्जिनीगुणइत्यमरः । सेषुमारोपितबाणम् । पिनाकम्पिनाकनामकंस्व-

धनुः। दधतन्धारयन्तम्। पु० की०। प्रतिभयमतिभयङ्करम्। क्रोधावेशाद्वीररसोद्रेकाद्वा। अरुणंशोणवर्णम्। विशालमतिदीर्घम्। नेत्रयोः। युग्मम्। स्वतन्त्रत्वाद्द्वयमेवच। दधानम्। पु० की०। निर्मायंवस्तुतोमायातीतम्। यद्वा। निर्मायंनिर्दम्भंयथास्यात्तथा। देवैर्गीयतेइतिदेवगायस्तम्। पु० की०। विततयाऽतिबहुलतरया। पृतनयाचम्वा। सहवर्त्ततइतितथाभूतस्तम्। पु. की.। सन् लोकोत्तरप्रकाशः। किरातेन्द्रस्यकिरातराजस्यकायइवकायोदेहोयस्यतम् ॥३६॥

पुष्याश्वद्दिव्यवल्लीघटितसुमुकुटभ्राजिभालं विशालं सज्यं सेषु म्पिनाक म्प्रतिभय मऽरुणं नेत्रयुग्मन्द धानम् ॥ निर्माय न्देवगायं सविततपृतनं सत्किरातेन्द्रकाय म्पार्वत्या चारुगत्या सह हृदि निदधे सर्वदा साधु शर्वम् ॥ ३६ ॥

अथपरिणयकालिकन्ध्यानान्तरमाह। सालङ्कारेति। श्रीगिरीशंश्रीमहेशंस्मरामिहृदिध्यायामि। कीदृशंश्रीगिरीशम्। अलङ्कारश्चातपत्रञ्च। ताभ्यांसहितम् सालङ्कारन्दिव्यमौक्तिकजालादिविभूषितमातपत्रंयस्यतामितिवा। पु. की.। अमरगणैर्विवाहोत्सवशोभार्थम्। समागतैश्शक्रादिदेवसमूहैः। स्तुतंनुतम्। पु. की.। मातृभिर्ब्राह्मयादिभिस्सप्तभिः। वैवाहिकमङ्गलगीतगानार्थमागताभिः। उपगीतम्। पार्श्वगानेनसम्भावितम्। ब्राह्मीत्याद्यास्तुमातरइत्यमरः। आदिनाब्रा-

ह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा। वाराहीचतथेन्द्राणीचामुण्डासप्तमातरः। इतिग्राह्याः। पु. की.। अनेकैर्नानावि-
धैरसङ्ख्यातैश्च। दिव्यैस्सुन्दरैस्स्वर्गादागतैर्वा। वाद्यैर्दुन्दुभिपणवादिभिः। ध्वनितम्प्रतिध्वानेनसम्भृतम्। सकला-
नामखिलानाम्। पूर्णानांवा। दिशाम्पूर्वादीनाङ्ककुभाम्। चक्रवालंमण्डलंयेनसतम्। दिशस्तुककुभः काष्ठाआशाश्चह-
रितश्चताइति। चक्रवालन्तुमण्डलमितिचामरः। पु. की. बालैर्गणादिमुनिमहर्षिशिशुभिः। बालाभिस्त्रीभिः। अर्था-

॥ २२ ॥

सालङ्कारातपत्रं स्तुत मऽमरगणै र्मातृभि श्चो पगीतं वाद्यै र्दिव्यै रनेकै र्ध्वनितसकलदिक्चक्रवालं सबा-
लम् ॥ आरूढ श्चारुभूष म्वृषभ मऽतिसितं वारवेषाभिरामं यान्तं शैलेन्द्रगेह न्त्रिभुवनजनकं श्रीगिरीशं
स्मरामि ॥ ३७ ॥

द्गानननर्तनार्थागताभिरप्सरोभिश्चवा। सहवर्त्तते। सतथाभूतस्तम्। पु. की.। चारुभूषंनानाविधदिव्याभरणसमल
ङ्कृतम्। अतिसितमत्यन्तशुभ्रवर्णम्। वृषभम्। निजवाहनम्वृषम्। आरूढम्। पु. की.। वरस्यजामातुः। अयंचारः।
सचासौवेशोनेपथ्यश्च। तेन। अभिराममतिसुन्दरम्। वरोजामातरिवृत्तौदेवतादेरभीप्सिते। षिड्गेपुंसित्रिषुश्रेष्ठेकुङ्कु-
मेतुनपुंसकमिति। वेशोवेश्यागृहे। नेपथ्येचेतिमेदिनी। पु. की.। शैलेन्द्रगेहमोषधिप्रस्थनगरस्वरूपपर्वतराजहिमाल

॥ २२ ॥

थसञ्च । यान्तम् । स्वविवाहार्थङ्गच्छन्तत् । पु. की. । वस्तुतस्तु । त्रिभुवनजनकम् । अखिलब्रह्माण्डपितरम् ॥ ३७ ॥
अथध्यानान्तरमाह । स्कन्धेइति । अहम् । शङ्करम् । संस्मरामिध्यायामि । कीदृशंशङ्करम् । प्रदीप्तम् । स्वाभाविकेन । निजेनतेजसा । प्रकाशितम् । कठिनमतिदृढम् । मौक्तिकालङ्कृताग्रमुक्ताफलविभूषितकोटिप्रदेशम् । अजगवम्पिनाकापरपर्यायंनाम धनुश्चापम् । पिनाकोऽजगवन्धनुरित्यमरः । वामेस्कन्धेंऽसे । दधानम् । पु. की. । अथच । दक्षेदक्षि-

स्कन्धे वामे च दीप्त ङ्कठिन मऽजगवं मौक्तिकालङ्कृताग्र न्दक्षे हस्ते च बाणं स्रज मुरुमणिजां सन्दधान श्च कण्ठे ॥ अर्केन्दूग्न्यक्ष मुच्चैरुरगपतिलसद्वक्षसं नीलकण्ठं नासाग्रोल्लासिदृष्टिं सगिरिवरसुतं शङ्करं संस्मरामि ॥ ३८ ॥

णे । हस्तेकरे । बाणंशरम् । दधानम् । पु. की. । उरुर्मणिजांमहारत्नघटिताम् । स्रजंमालाम् । कण्ठेगले । दधानम् । पु. की. । अर्केन्द्वग्न्यक्षंरविशशिवह्निनेत्रम् । उच्चैर्मांसलत्वादुन्नतम् उरगपतिनासर्पराजेन । लसत्प्रकाशमानश्च । वक्ष-उरस्स्थलंयस्यतम् । उरोवत्सञ्चवक्षश्चेत्यमरः । पु. की. । नीलकण्ठंमहोग्रसामुद्रगरलधारणात् । श्यामलगलम् पु. की. । नासाग्रोल्लासिनीनासिकाग्रप्रदेशसंलग्ना । दृष्टिर्यस्यसतम् । पु. की. । सगिरिवरसुतंसपार्वतीकम् ॥ ३८ ॥ अथातिसुभ-

गन्ध्यानान्तरमाह अक्षस्रगिति । अहम् । सर्वदा । महेशम् । अन्तरन्तःकरणे । दधे । ध्यायामीत्यर्थः । कीदृशंमहेशम् । अक्षस्रक् । रुद्राक्षमाला । पर्शुः कुठारः रङ्कुर्मृगः । त्रिशिखन्त्रिशूलम् । तेषाम् । धरन्तीतिधराः । पचाद्यच् । कराश्चत्वारोहस्तायस्यसतम् । अक्षोज्ञातार्थशकटव्यवहारेषुपाशके । रुद्राक्षेन्द्राक्षयोस्सर्प्पेविभीतकतरावपि । चक्रेकर्षेपुमान्क्लीवन्तुस्थेसौवर्चलेन्द्रिये । इतिमेदिनी । पु. की. । रत्नसिंहासनस्थंविविधमणिमयसिंहासनोपरिविराजमानम् । पु. की. । पार्व-

अक्षस्रक्पर्शुरङ्कुत्रिशिखधरकरं रत्नसिंहासनस्थ म्पार्वत्युद्भासिपार्श्व न्त्रिदृशमऽभिनुतं निर्ज्जरै रिन्द्रमुख्यैः ॥
जाट ञ्जूटं सगङ्गं विधु मऽपि दधत म्भस्म सद्रत्नभूष न्त्रैलोक्येशं महेशं रुचिरुचिरतनुं सर्वदा ऽन्त र्दधे
ऽहम् ॥ ३९ ॥

त्याश्रीगौर्य्या । उद्भासीशोभमानः । पार्श्वोवामकक्षाधःप्रदेशोयस्यसतम् । बाहुमूलेउभौकक्षौपार्श्वमस्त्रीतयारधइत्यमरः । पु. की. । त्रिदृशान्त्रिनेत्रम् । पु. की. । इन्द्रमुख्यैश्शक्रादिभिः । निर्ज्जरैर्देवैः । अभिनुतमभिष्टुतम् । पु. की. । सगङ्गंश्रीगङ्गयासहितम् । जाटञ्जटासम्बन्धिनम् । जूटम्बन्धविशेषम् । अपिच । विधुश्चन्द्रमसम् । भस्मविभूतिश्च । शिरसिमस्तकेशरीरेच । यथायोग्यम् । दधानन्धारयन्तम् । पु. की. । सन्तिश्रेष्ठानि । रत्नानिमणयोयत्र । ताः । भूषाभूषणा-

नियस्यतम् । पु. की. । त्रैलोक्येशन्त्रिभुवनप्रभुम् । पु. की. । रुच्या । सहजयास्वर्दीप्त्या । रुचिरास्वभक्तजनमनोहरा । तनुश्शरीरंयस्यतम् ॥ ३९ ॥ अथसुभगतरन्ध्यानान्तरमाह । सौवर्णाभ्यामिति । तंश्रीमृत्युञ्जयेशम् । श्रीमृत्युञ्जयनामकमीशम् । श्रीशङ्करम् । अतिप्रमोदात् । सततम् । हृदि । सन्दधे । तङ्कम् यः । सौवर्णाभ्यांसुवर्णघटिताभ्याम् । स्वखचितैः । विविधमणिगणैर्नानाविधरत्नप्रकरैः । समन्तात्सर्वतः । अञ्चिताभ्यांसेविताभ्याम् । शोभिताभ्यामिति-

सौवर्णाभ्या ङ्घटाभ्यां विविधमणिगणै रञ्चिताभ्यां समन्ता त्कुम्भीन्द्रोत्थापिताभ्यां निसृतवरपयःपूरसम्प्लावितोयः ॥ नागेन्द्रस्फारहारप्रविलसदुरस म्भालचन्द्र न्त्रिनेत्र न्तं श्रीमृत्युञ्जयेशं हृदि सतत मऽहं सन्दधे ऽतिप्रमोदात् ॥ ४० ॥

यावत् । कुम्भीन्द्रोत्थापिताभ्याम् । स्वर्गजेन्द्राभ्याम् । उत्थापितौ । शुण्डादण्डेनोच्चैःकृतौ । ताभ्याम् । घटाभ्याम् । कलशाभ्याम् । निसृतोऽधःपतितः । यः । वरस्य । दिव्यत्वादत्युत्तमस्य । पयसोदुग्धस्य । पूरःप्रवाहः । तेन । सम्प्लावितस्सर्वतः । आर्द्रीकृतः । तङ्कीदृशम् । नागेन्द्रएवस्फारोविशालोहारः । तेन । प्रकर्षेणविशेषेण । लसच्चमत्कृतिमत् । उरोवक्षस्स्थलंयस्यसतम् । पु. की. । भालेमस्तके । चन्द्रोऽर्द्धरजनीशोयस्यसतम् । पु. की. । त्रिनेत्रन्त्रिनय-

नम् ॥ ४० ॥ अथविचित्रन्ध्यानान्तरमाह । संसेति । अहम् । अविरतंनिरन्तरम् तम्पार्वतीशंश्रीशङ्करम् । स्मरामिध्याया-
मि । तङ्कम् । संसारोच्छित्तिकामैर्जन्ममरणादिदुःखस्वरूपसंसारसमूलोन्मूलनाकाङ्क्षिभिः संयमेनविषयेभ्योनिखिले-
न्द्रियपराङ्मुखीकरणेन । एकोमुख्यः । अन्तोऽवसानम् । येषाम् तथाभूताः । यामाः । अष्टौ । प्रहराः । येषान्तैः यद्वा ।
संयमाय । एकान्ते । निर्जनेप्रदेशे । यामाः । अष्टौप्रहराः । सकलःकालइतियावत् । येषान्तैः । अतएव । अनवमेषूत्त-

संसारोच्छित्तिकामै रनवमपरमै स्संयमैकान्तयामै र्यत्पादाम्भोरुहार्चा कथमपि विहिता राति कैवल्यमुक्तिम् ॥

सद्भस्मोद्धूलिताङ्ग न्त्रिनयन मुरगै र्भूषितं नीलकण्ठ ङ्गङ्गोल्लासस्युत्तमाङ्ग न्त मऽविरत मऽह म्पार्वतीशं

स्मरामि ॥ ४१ ॥

मेषु । परमैरत्युत्तमशोभैः । यद्वा । अनवमासमुत्कृष्टा । अतएव । परासर्वोत्तरा । मालक्ष्मीर्भक्तिरसशोभायेषान्तैः ।
निकृष्टप्रतिकृष्टार्वरेफयाप्याचमाऽधमाइत्यमरः । कथमपि । विधिनाऽविधिनावा । विहिताकृता । यस्य । पादाम्भोरुह-
योश्चरणकमलयोः । अर्चापूजा । कर्त्री । कैवल्यमुक्तिम् । रातिददाति समर्चकेभ्योदिशतीत्यर्थः । कीदृशन्तम् । सता ।
उत्तमेन । भस्मनाभसितेम । उद्धूलितानिरूषितानि । अङ्गान्यवयवाः । अङ्गङ्गान्नंवायस्यसतम् । अङ्गमन्तिकगात्रयोः ॥

उपसर्ज्जनभूतेस्यादभ्युपायप्रतीकयोरितिहेमचन्द्रः पु० की० त्रिनयनन्त्रिनेत्रम् पु० की० उरगैर्भूषणीभूतैस्सर्पैः भूषितम-
लङ्कृतम् पु० की० नीलकण्ठम् पु० की० गङ्गया उल्लासि सुशोभि उत्तमाङ्गंशिरोयस्यतम् ॥४१॥ अथमहामहिमशालि ध्याना
न्तरमाह भूवार्य्यग्न्यादीति अहम्सततमनिशम् श्रीगिरीशम् हृदिसन्दधेध्यायामीत्यर्थः कीदृशंश्रीगिरीशम् भूवार्य्यग्न्यादीनां
मूर्त्तीनाम् निजस्वरूपाणामष्टानाम् आदिना वातव्योमसूर्यचन्द्रयजमानागृह्यन्ते प्रबलमहिमतोलोकोत्तरप्रभावतः निजैरा-

भूवार्य्यग्न्यादिमूर्त्तिप्रबलमहिमतो व्याप्य विश्वं समग्रं सत्तास्फूर्त्तिप्रियत्वैर्न्निजसहजगुणैर्वर्त्तमानं स्वशक्त्या ॥
भक्तोद्धाराय सद्यो वरमभयमथो पर्शुमेणन्दधानन्त्र्यक्षन्दीनैकपक्षं हृदि सततमहं सन्दधे श्रीगिरीशम् ॥४२॥

त्मीयैः सहजैस्स्वाभाविकैः अकृत्रिमैरित्यर्थः गुणैः तत्तदवसरार्हैः सत्तादिभिः तत्रसत्ता अस्तीतिसद्भावः स्फूर्त्तिःप्रकाश-
वत्त्वेनस्फुरणम् प्रियत्वमिष्टसाधनताज्ञानाश्रयत्वेन प्रीतिपात्रत्वम् समग्रंसम्पूर्णम् विश्वञ्जगत् व्याप्यतदभिन्नतामवलम्ब्य
स्वशक्त्यास्वसामर्थ्येन वर्त्तमानन्तिष्ठन्तम् पु० की० सद्योझटिति भक्तानामुद्धारायजन्ममरणदुःखापगमार्थम् वरंवरमुद्राम्
अभयमभयमुद्राम् अथो अनन्तरम् पर्शुङ्कुठारम् एणंमृगम् चतुर्भिःकरैः धारयन्त्यादधानन्धारयन्तम् पु० की० त्र्यक्ष-
न्त्रिनेत्रम् पु० की० दीनानाममार्दवमत्ताहैन्यविशिष्टानाम् शरणागतानाञ्जनानाम् एकपक्षंमुख्यसहायम् ॥ ४२ ॥ अथात्यु-

त्तमन्ध्यानान्तरमाह शम्भोइति हेशम्भोश्रीशङ्करत्वाम् प्रचुरतररसे बहुलतररागे भक्तिसंस्कृतइतियावत् रसोगन्धरसेजले शृङ्गारादौविषेवीर्य्येतिक्तादौद्रवरागयोः देहधातुप्रभेदेचपारदस्वादयोरपीतिमेदिनी मानसेहृदये अहम् दधेध्यायामीत्यर्थः कीदृशन्त्वाम् दम्भोलिर्वज्रम् हेतिश्शस्त्रंयस्यसतथोक्तः शक्रः सः प्रमुखे प्रमुखोवा आदावादिर्वा येषान्ते येसुरवराविबुध-श्रेष्ठाः यमवरुणकुवेरप्रभृतयः तैः प्रार्थनीयम् अङ्घ्रियुग्मम्पादपद्मद्वयंयस्यतम् पु० की० शान्तोद्वेगदृजनानुद्वेगजनकः

शम्भो दम्भोलिहेतिप्रमुखसुरवरप्रार्थनीयाङ्घ्रियुग्मं शान्ताकारं सदारं सगुहगणपतिं नन्दिभृङ्ग्यादिजुष्टम् ॥
कोटिब्रह्माण्डनाथम्परशिवदमथो मोल्लसत्पुण्यगाथं सर्वस्वं स्वम्परं स्वम्प्रचुरतररसे मानसे त्वान्दधेहऽम् ॥४३॥

आकारोमूर्त्तिर्यस्यतम् पु० की० दारैस्स्त्रिया अर्थाच्छ्रीपार्वत्या सहवर्त्ततेसतथोक्तस्तम् अथपुम्भूम्निदाराइत्यमरः पु० की० गुहगणपतिभ्याङ्कार्त्तिकेयगणेशाभ्यामात्मजाभ्याम् सहवर्त्तते सतम् पु० की० नन्दिभृङ्ग्यादिभिर्मुख्यैस्स्वानुचरैः जुष्टंस-देवसंवितम् पु० की० कोटिब्रह्माण्डनाथमनन्तब्रह्माण्डस्वामिनम् पु० की० परशिवदंस्वभक्तजनानांमोक्षप्रदातारम् अथो पुनः प्रोल्लसन्त्योविचित्रत्वादत्यन्तप्रकाशमानाः पुण्याः अतिपवित्राः गाथावृत्तानि कथाप्रसङ्गाइतियावत् यस्यतम् गाथाश्लो-कंसंस्कृतान्यभाषायाङ्गयवृत्तयोरितिमेदिनी पु० की० स्वमात्मीयम् परमुत्तमम् स्वन्धनम् पु० की० किम्बहुना वस्तुतस्तु

स्वमात्मीयम् सर्वस्वंवस्तुमात्रस्वरूपम् ॥४३॥ अथसुकथागर्भन्ध्यानान्तरमाह श्रीति विश्वेशंश्रीविश्वनाथम्सर्वदा अन्तरन्तःकरणे अहम् दधेध्यायामि कीदृशंविश्वेशम् श्रीविष्णोः नयनकमलजाम् प्रतिज्ञातकमलसहस्रपूजावसरे दैवगतिविहितैककमलन्यूनतासमयेएव समुद्धृतस्वकीयनयनकमलविहिताम् पूजामर्हाम् एत्याङ्गीकृत्य भक्तवर्यायनिखिलसेवकशिरोमणये तस्मैश्रीविष्णवे प्रीतितःप्रमोदातिशयात् दिव्यमलौकिकम् सच्छक्ति सर्वाधिकसामर्थ्यम् अतएव त्रिभुवनविजयि

श्रीविष्णोरेत्य पूजां नयनकमलजाम्भक्तवर्य्याय तस्मै दिव्यं सच्छक्तिचक्रन्त्रिभुवनविजयिप्रीतितस्संवितीर्य ॥
स्वीयेनोच्चैर्महिम्ना जगदिदमखिलं व्याप्य संतिष्ठमानं विश्वेशं व्योमकेशंत्रिदशमुरुमहं सर्वदाऽन्तर्दधेऽहम् ॥४४॥

त्रैलोक्यविजयकारि चक्रंसुदर्शनाख्यंशस्त्रविशेषम् संवितीर्यदत्वाच उच्चैरातिमहता स्वीयेनसहजेन आत्मीयेन महिम्नामहत्त्वेन प्रभावेणेत्यर्थः इदन्दृश्यम् अखिलंसकलम् जगद्भुवनम् व्याप्यतदेकरूपताम्प्राप्य सन्तिष्ठमानम् सदैववर्त्तमानम् तथापि भक्तजनसमुद्धारार्थम् व्योमकेशमाकाशाभिमुखातिलम्बमानकचकलापम् अथच त्रिदशन्त्रिनेत्रम् तथा उरुर्महान् महः ब्रह्मादिमूर्त्तित्रयेणत्रिभुवनजननाद्युत्सवोयस्यसतम् ॥४४॥ अथवर्त्तमानकालिकश्रीकाशिकास्थश्रीविश्वनाथध्यानान्तरमाह लक्ष्मीति अहम् विश्वनाथम् भजेसेवे ध्यायामीतियावत् कीदृशंविश्वनाथम् त्रिभुवनजननीसर्वलोकेश्वराभ्यांविश्वमातृ

सकलभुवनस्वामिभ्याम् लक्ष्मीनारायणाभ्यांश्रीविष्णुभ्याम् शोभीमनोहरः द्वारप्रदेशोयस्यतस्मिन् बहुभिरनेकैः विविधै-
र्नानाकारैर्नानाभेदैर्वा लसद्भिर्दीप्यमानैः लिङ्गैश्शिवमूर्त्तिविशेषैः लिङ्गंचिह्नेऽनुमानेचसाङ्ख्योक्तप्रकृतावपि शिवमूर्त्ति-
विशेषेऽपिमेहनेऽपिनपुंसकमितिमेदिनी दीप्तमतिशोभितम् उरुविशालम् मध्यमन्तरप्रदेशोयस्यतस्मिन् न्यायावलग्नयो-
र्मध्यमन्तरेचाधमेत्रिष्वितिरभसः सौवर्णेहैमे अतिविचित्रस्वरूपत्वात् शिल्पिनांशिल्पविद्याकुशलानांकारूणाम् शिल्पप्र-

॥ २६ ॥

लक्ष्मीनारायणाभ्यान्त्रिभुवनजननीसर्वलोकेश्वराभ्यां शोभिद्वारप्रदेशे बहुविविधलसल्लिङ्गदीप्तोरुमध्ये ॥
सौवर्णे शिल्पिशिल्पप्रकटनकुशले मन्दिरे काशिकास्थे राजन्तंशैलपुत्र्या सगजवदनया विश्वनाथम्भजेऽहम् ।४५।

कटनेशिल्पविद्याभ्यासातिशयाभ्यासप्रकाशने कुशलमतिदक्षन्तस्मिन् काशिकास्थेवाराणसीस्थे मन्दिरे गजवदनेनगण-
पतिनास्वपुत्रेणसहवर्त्ततेसा तथाभूतयाशैलपुत्र्याश्रीपार्वत्या राजन्तम् शोभमानम् ॥ ४५ ॥ अथमहामहिमभ्यानान्तरमाह
स्वान्तइति हेशङ्कर तन्त्वाम् अहम्भजेध्यायामि तङ्कम् अनन्यसक्तः त्वद्भरभक्तिभावंविहाय अन्यत्रव्यापारे आसक्तिरहितः ॥ २६ ॥
अथच अखिलानाम् विषयाणांशब्दादीनाम् रसेसमास्वादे संविरक्तः अथच अगण्येऽगणनीये धर्म्यैधर्म्मादनपेते कर्मणि-
दानादिनि अतिरक्तोऽत्यन्तश्रद्धालुः भक्तोभक्तिमान्पुमान् भुवनपरिवृढमखिललोकप्रभुम् अतएव महेशंमहास्वामिनम्

अतएव परेशम्ब्रह्मादीनामप्यधीशम् वक्षोदेशस्थशेषम् मालीकृताऽनन्तम् क्षितिधरवरजाऽलङ्कृताऽदक्षपार्श्वम् श्रीपा-
र्वतीभूषितवामभागम् यम् स्वान्तेहृदये चित्तन्तुचेतोहृदयंस्वान्तंहृन्मानसंमनइत्यमरः अत्यन्तंसम्यक् धृत्वाध्यानविषयं-
विधाय गुरुमहत् सुखम् परमानन्दम् व्रजतिप्राप्नोति ॥ ४६ ॥ अथभङ्ग्यन्तरेणध्यानान्तरमाह विद्येति हेगिरिशकैलासै-

स्वान्ते धृत्वा नितान्तम्भुवनपरिवृढं श्रीमहेशम्परेशं वक्षोदेशस्थशेषक्षितिधरवरजाऽलङ्कृताऽदक्षपार्श्वम् ॥ यम्भ-
क्तोऽनन्यसक्तोऽखिलविषयरसे संविरक्तोऽतिरक्तो धर्म्यैककर्म्मण्यगण्ये व्रजति गुरुसुखन्तम्भजे शङ्कर त्वाम् ।४६।
विद्याविद्योतमानाः कृतिसुकृतिजनभ्राजिगोष्ठीप्रधानास्त्वन्नामाख्यानगानानुरतसुमनसस्सद्गुणैस्सेव्यमानाः ।
प्रीत्या रीत्या सुनीत्या गिरिश तव पदं यस्य संसेव्य यांतिकैवल्यंतंभवंतंभासितभूतमजंध्यानगम्यङ्करोमि ।४७।

कनिवासप्रियशङ्कर अहम् तम्भवन्तम् ध्यानगम्यन्ध्यानैकप्राप्यम् करोमिविदधामि कीदृशम्भवन्तम् भसितम्भस्मविभ-
र्त्तीतिभसितभृत् तम् पु० की० अजञ्जन्मरहितम् सदैकरसम् तङ्कम् विद्याविद्योतमानास्सकलविद्याप्रकाशमानाः अतएव
कृतिभिर्विद्वद्भिः सुकृतिभिर्द्धार्म्मिकैर्ज्जनैः भ्राजिनीषुशोभमानासु गोष्ठीषुसभासु गोष्ठीसभायांसंलापइतिविश्वप्रकाशः

प्रधानामुख्याः पुनः त्वन्नाम्नाम् शिवहरभवमृडगिरिशेत्यादीनाम् भवदभिधानानाम् आख्यानेसमुच्चारणे गानेच अनुरत-
म्प्रीतिमत् मनाश्चित्तम् येषाम् ते अतएव साद्भिःश्लाघनीयैः गुणैस्सौजन्यादिभिः सेव्यमानाः पूजनीयाः जनाः यस्यतव
पदद्वन्द्वचरणम् प्रीत्याऽनुरागेण रीत्याशैवशास्त्रमर्यादया नीत्या शङ्करार्चनविधिज्ञसद्गुरुसदुपदेशशिक्षया संसेव्यसमर्च्य
कैवल्यन्द्वैतशून्यत्वम् सांसारिकदुःखराहित्यमितियावत् यान्तिप्राप्नुवन्ति ॥ ४७ ॥ अथमहामाहिमध्यानान्तरमाह श्रीश-

श्रीशम्भो पार्वतीश त्रिपुरहर गुरो नीलकण्ठ स्मरारे सन्तस्सौभाग्यवन्त स्स्थिरतरमनसो ये भवन्तं लसन्तम्।
स्वीयेनोच्चैर्म्महिम्ना परिजनसहितंभक्तिभावाद्भजंते ते नो सद्यो लभंते किमु निगमनुतं शाश्वतं सौख्यमन्ते ।४८।

म्भोइति हेश्रीशम्भोहेसकलकल्याणनिदान हेपार्वतीश सकलजगज्जनन्याश्शैलराजहिमवत्पुत्र्याः स्वामिन् हेत्रिपुरहर
सकलभुवनोपद्रवकारित्रिपुरासुरबधकारिन् हेगुरो हेसर्वदेवार्च्चित हेनीलकण्ठ आतदुस्सहवार्धिसमुद्भूतगरलपानेन
सकलजगदुपद्रवहारक हेस्मरारे हेत्रिश्वत्रिजयोद्धुरदर्प्पकन्दर्प्पशत्रो येसौभाग्यवन्तः सुभगस्वभावाः स्थिरतरमनसो-
जितचित्ताः सन्तः सन्तोमहात्मानः उच्चैः सर्वोत्तमेन स्वीयेनसहजेनात्मीयेन महिम्ना महत्त्वेन लोकोत्तरप्रतिष्ठास्पदत्वेन
लसन्तंशोभमानम् परिजनसहितम् गुहगणपतिगौरीनन्दिभृङ्ग्यादिसहवर्त्तमानम् भवन्तम् भगवन्तन्त्वाम् भक्तिभावा-

द्भक्त्युद्रेकात् भजन्तेसेवन्ते ते अन्तेशरीरावसाने सद्यश्शीघ्रम् नतुविलम्बेनजन्मान्तरेषु निगमनुतम् वेदस्तुतम् निगमाः पूर्वणिग्वेदनिश्चयाध्ववणिक्पथाइतिहेमचन्द्रः शाश्वतंसदातनम् मोक्षलक्षणम् सौख्यम् कल्याणम् नोलभन्तेकिमु नाऽप्नुवन्तिकिम् लभन्तएवेत्यर्थः ॥ ४८ ॥ अथरुचिरतरन्ध्यानान्तरमाह भक्तेति अहम् अनन्यगतिकोलक्ष्मीनारायणः कविः पार्वतीशंश्रीशङ्करम् भजेसेवे ध्यायामीतियावत् कीदृशम्पार्वतीशम् भक्तानाम् अर्त्तेराध्यात्मिकादिदुःखपीडायाः अर्त्तिःपी-

भक्तार्त्तिध्वंसदक्षंकृतशरणगतप्राणिरक्षं स्वलक्षं नक्षत्रेशार्द्धभालं सुललिततलपनं सद्धलङ्कालकालम् ॥
कण्ठे कालं विशालंभुवनपतिगणे दुर्ज्जनालौ करालं श्रीमन्तन्देवसन्तञ्जगदवनरतंपार्वतीशम्भजेऽहम् ॥ ४९ ॥

डाधनुष्कोट्योरित्यमरः ध्वंसेऽपगमे दक्षङ्कुशलम् पु० क्री० यतः कृताविहिता शरणगतानाम् प्राणिनाम् अनन्तानाम्भक्तानाम् रक्षायेनतम् पु० क्री० स्वेषामात्मीयानाम् भक्तानामितियावत् लक्षंशरव्यम् मनोगत्यवधिस्थानम् शोभनमलक्षमरिपुबाणादीनामशरव्यम् शत्रुकृतपराभवानास्पदमितियावद्वा स्वस्यैवात्मनएव लक्षंशरव्यंवा स्वस्वरूपध्यानपरायणमित्यर्थः लक्षानपुंसिसङ्ख्यायाङ्क्लीवंव्याजशरव्ययोरितिमेदिनी स्वपक्षमितिपाठे निजजनसहायमित्यर्थः पु० क्री० नक्षत्रेशास्यचन्द्रमसः अर्द्धःखण्डम् भालेललाटेयस्यसतम् नक्षत्रेशार्द्धइव पूर्णचद्रार्द्धइव भालंयस्यसतमितिवा पु० क्री० सुल-

लितमत्यन्तसुन्दरम् लपनंमुखंयस्यतम् वक्त्रास्येवदनन्तुण्डमाननंलपनंमुखमित्यमरः सुललितलपनमतिमनोहारिभाषणंवा
पु० की० सदत्युत्तमम् बलंसैन्यम्पराक्रमोवायस्यसतम् बलंरूपेस्थामनिस्थौल्यसैन्ययोरितिहेमचन्द्रः पु० की० कालसा-
ऽपिकालस्तम् स्वभक्तजनकालनिवारकमित्यर्थः पु० की० कण्ठेगलेकालम् धृतगरलत्वात् कृष्णवर्णम् पु० की० भुवनपति-
गणे शक्रादिलोकपालसमूहे विशालंमहान्तम् पु० की० दुर्जनानाञ्जगदुपद्रवकारिणाम् आलीपरम्परायाम्पङ्क्तौ समुदाये-

श्रीमन्नद्रीन्द्रकन्याहृदयसरसिजप्रातरर्क प्रभो त्वाञ्चञ्चचन्द्रार्द्धमौलिं ललितसुरसरित्पूरराजज्जटाकम् ॥
दिग्वस्त्रन्दिव्यशस्त्रं सकलसुरनुतंपार्वतीशोभिताङ्कं नन्द्यादिद्योतिपार्श्वन्त्रिजगदधिपतिं सर्वदा सन्दधेऽन्तः॥५०॥

इत्यर्थः पुंस्यालिर्विशदाशये विषुस्त्रियांवयस्यायांसेतौपङ्क्तौचकीर्त्तिततिमेदिनी करालम्भयङ्करम् पु० की० श्रीमन्तन्त्रि-
वर्ग्गादिसंसेवितम् पु० की अतएव देवसन्तंविबुधमात्रश्रेष्ठम् पु० की० अतएव जगदवनरतंलोकसंरक्षणतत्परम् ॥ ४९ ॥
अथातिशोभनन्ध्यानान्तरमाह श्रीमन्निति हेश्रीमन् लोकोत्तरैश्वर्यशोभिन् हे अद्रीन्द्रकन्याहृदयसरसिजप्रातरर्क श्रीपा-
र्वतीमनोऽम्बुजनवीनमार्त्तण्ड हेप्रभोसर्वसमर्थ त्वाम्भवन्तम् सर्वदा अन्तरन्तःकरणे अहम् अनन्यभक्तः सन्दधेधारयामि
कीदृशन्त्वाम् चञ्चचन्द्रार्द्धमौलिमतिललितेन्दुशकलकलितललाटम् पु० की० ललितेनातिशोभनेन सुरसरित्पूरेणश्री-

गङ्गाप्रवाहेण राजन्त्यःप्रकाशमानाः जटायस्यतम् बहुव्रीहौकप् पु० की० दिग्वस्त्रन्दिगम्बरम् पु० की० दिव्यानिमनोहराणि शस्त्राणित्रिशूलादीनि आयुधानियस्यतम् पु० की० सकलसुरनुतंसर्वदेवाभिष्टुतम् पु० की० पार्वत्या शोभितस्समलंकृतः अङ्कः उत्सङ्गवामप्रदेशोयस्यसतम् पु० की० नन्द्यादिभिः द्योतिनौशोभमानौपार्श्वौदक्षवामप्रदेशौयस्यसतम् पु० की० त्रिजगदधिपतिन्त्रिभुवनेश्वरम् ॥ ५० ॥ अथसपरप्रार्थनन्ध्यानान्तरमाह विश्वमिति हेश्रीपुरारे हेत्रिपुरासुरशत्रो अतनु-

विश्वं व्याप्य स्वधाम्ना सततमतनुना वर्त्तमानंभवन्तन्धृत्वोमासङ्गकान्तं स्वहृदयकमले तुष्टचेता विनेता ॥
सर्वेषामिन्द्रियाणामऽभवमहमहो सम्प्रति श्रीपुरारे कामारे ध्वस्तसारे जगति हतरतिं मां कुरु त्वं नितांतम् ।५१।

नाअतिमहतास्वधाम्नानिजतेजसा सततमविरतम् विश्वञ्जगत् व्याप्यसमाक्रम्य वर्त्तमानम् सन्तम् अथच उमायाःश्रीपार्वत्या सङ्गेन शरीरार्द्धे उत्सङ्गवामप्रदेशेवा धारणेन कान्तम् भक्तजनमनोहरम् भवन्तम् श्रीमन्तन्त्वाम् स्वेस्वकीये हृदयकमले ध्यानार्हहृत्पद्मप्रदेशे धृत्वा तुष्टचेताः प्रह्लादभरसम्भृतमनाः अहोचित्रम् सर्वेषामिन्द्रियाणाम् विनेतानियन्ता वश्यकर्त्तेतियावत् अहम् अभवञ्जातोऽस्मि हेकामारेकन्दर्पशत्रो सम्प्रति इदानीम् ध्वस्तसारेसारविरहिते सर्वथैवत्याज्यहे जगति अस्मिन्विश्वस्मिन् नितान्तमत्यन्तम् हतरतिंनष्टानुरागम् त्यक्तासक्तिमितियावत् माम् त्वम् कुरुविधेहि अपा-

रदुःखजन्ममरणस्वरूपसंसारसंसर्गशून्यङ्कुर्वित्यर्थः ॥ ५१ ॥ अथातिहृदयङ्गमन्ध्यानान्तरमाह एकान्ते इति हेत्रिपुरहर महोद्दण्डमहोपद्रवकारित्रिपुरासुरवधकारिन् हेविभोसर्वव्यापक अमरविनुतमिन्द्रादिदेवाभिष्टुतम् चन्द्रभालंशशिशेखरम् त्रिनेत्रंरविशशिवह्निनयनम् श्रीशैलेन्द्रात्मजेशंश्रीपार्वतीशम् तन्त्वाम् अहम् संस्मरामिध्यायामि तङ्कम् एकान्तंनिर्जनप्रदेशे योगनिष्ठायोगाभ्यासपरायणाः स्थिरतरमनसोजितचित्ताः अतएव प्राप्तलोकप्रतिष्ठास्समधिगतभुवनगौरवाः

एकान्ते योगनिष्ठास्स्थिरतरमनसः प्राप्तलोकप्रतिष्ठाः प्रोद्घाट्योच्चैर्हृदब्जं यमिह सुरुचिरन्ध्यानगम्यं विधाय॥
प्राप्तास्सद्यो विमुक्तिन्तममरविनुतश्चन्द्रभालं त्रिनेत्रं श्रीशैलेन्द्रात्मजेशं त्रिपुरहर विभो त्वामहं संस्मरामि ॥५२॥

जनाः हृदब्जंहृदयकमलम् उच्चैरत्यन्तम् प्रोद्घाट्य योगकलयाविकसितंविधाय सुरुचिरमतिरम्यदर्शनम् यम् इहसमुद्घाटितेहृदब्जे ध्यानगम्यन्ध्यानैकास्पदम् विधायकृत्वा सद्यस्तस्मिन्नेवजन्मनि नतुचिरेणजन्मान्तरेषु विमुक्तिङ्कैवल्यम् जन्ममरणदुःखशून्यत्वमितियावत् प्राप्तास्समधिगताः ॥ ५२ ॥ अथसमाहात्म्यन्ध्यानान्तरमाह यस्येति हेभवहेशम्भो कल्याणहेतोश्रीशङ्कर देवेन्द्रवन्द्यम् देवेन्द्रेणपाकशासनेन देवेन्द्रैरिन्द्रयमवरुणकुवेरादिभिरमरश्रेष्ठैर्वावन्द्यम् अथच प्रमथैरेतन्नामधेयैर्निजगणैः परिवृतंसेवाकृतेव्याप्तम् अथच नन्दिभृङ्ग्यादिभिः पार्षदैः जुष्टंसर्वतस्सेवितम् अथच

भाग्यवत्यामहातपस्सिद्ध्यधिगतमहाभाग्यया अथच तनुजाभ्यांश्रीगणपतिश्रीतारकारिनामकाभ्यामङ्कस्थिताभ्यामात्म-
जाभ्याम् सुभगयाअतिशोभितया पार्वत्याश्रीगौर्या अङ्कस्थयापार्श्वस्थयावा अलङ्कृतम्भूषिम् तम् त्वाम्भवन्तम् नौमि
भक्त्यास्तौमि तङ्कन्त्वाम् यस्यतव ध्यानेन कठिनतराणामतिदुष्कराणाम् तपसाङ्कृच्छ्रव्रतादिस्वरूपाणाम् सिद्धिभारैर्ह्ला-
भबाहुल्यैः एकसाध्याङ्केवलनिष्पाद्याम् अथच सिद्धसङ्घैस्तपस्विविशेषसमूहैः देवयोनिविशेषसमूहैर्वा आराध्याम् सेव-

यस्य ध्यानेन सिद्धिङ्कठिनतरतपस्सिद्धिभारैकसाध्यामाराध्या सिद्धसङ्घैर्भवभवहतये मङ्क्षु भक्ता लभन्ते ॥
तंत्वान्देवेन्द्रवन्द्यम्प्रमथपरिवृतं नन्दिभृंग्यादिजुष्टं पार्वत्या भाग्यवत्या तनुजसुभगयाऽलंकृतं नौमि शंभो ।५३।

नीयाम् सिद्धिंविमुक्तिलक्षणाम् भवभयहतयेसंसारभीतिविनाशाय भक्ताभवत्सेवकाः लभन्तेप्राप्नुवंति ॥ ५३ ॥ अथ-
स्तुतिगर्भध्यानांतरमाह हेश्रीमन्निति हेश्रीमन् लोकोत्तरैश्वर्यादिसम्पन्न हेखण्डपर्शोसकलदुर्जनदलनकुशलपरश्वध मम
सकलमनोवाञ्छितार्थप्रदातासर्वाभिलाषपूरकः अथच सर्वापद्भारभारप्रविलयकुशलोऽखिलनानाविधविपत्तिसमूहसमू-
लोन्मूलनदक्षः अथच वदान्योदानशौण्डोऽधिकप्रदइत्यर्थः वदान्योदानशौण्डेस्याद्वाग्रुवादिनिवाच्यवदितिमेदिनी त्वद-
न्योभवदतिरिक्तः कः नकोऽपीत्यर्थः अथच श्रीकण्ठंशोभायुक्तग्रीवम् शाकपार्थिवादिसमासाश्रयणात्मध्यमपदलोपोबोध्यः

यतः नीलकण्ठङ्गरलधारणादतिश्यामलगलम् त्रिदृशान्त्रिनेत्रम् थसदृशंसदृशान्तरशून्यम् लोकपालैकपालंमघवादिसक-
लदिक्पालैकरक्षकम् हस्तेदक्षकरे अश्चत्पूजनीयत्वाद्दीप्यमानम् सत् ब्रह्मदेवसम्बन्धित्वादत्युत्तमम् कपालंशिरोऽस्थिय-
स्यसतम् भिक्षुकवर्यलीलाभिनयप्रकाशनाय करधृतविधातृनिस्त्वगुत्तमाङ्गमित्यर्थः कपालोऽस्त्रीशिरोऽस्थिस्याद्घटादे-
श्शकलेब्रजे इतिमेदिनी धृतसकलकलन्धृतसकलविद्यादिकम् कलास्यान्मूलरै वृद्धौशिल्या दावंशमात्रके षोडशांशेच-

हे श्रीमन् खण्डपर्शो मम सकलमनोवाच्छितार्थप्रदाता सर्वापद्भारभारप्रविलयकुशलः कस्त्वदन्यो वदान्यः ।
श्रीकण्ठंनीलकण्ठंन्त्रिदृक्षमसदृशं लोकपालैकपालं हस्ताश्चत्सत्कपालन्धृतसकलकलं हृद्यमेशन्दधे त्वाम् ॥५४॥

चन्द्रस्य कलनाकालभानतो रितिमेदिनी उमेशंश्रीपार्वती स्वामिनम् श्रीपार्वतीसहितमित्यर्थः त्वाम्भवन्तम् हृदिहृदया-
वकाशे दधेधारयामि ध्यायामीतियावत् ॥ ५४ ॥ अथातिहृदयङ्गमन्ध्यानान्तमाह तत्त्वेति हे श्रीशम्भो भवन्तन्त्वाम् सत-
तंनिरन्तरम् सतिपरिषक्कव्याये ध्यानार्हे इत्यर्थः हृदि भावयेचिन्तयामि कीदृशम्भवन्तम् तत्त्वज्ञानिना म्ब्रह्मनिष्ठ्यानाम्
जनानाम् एकवित्तम् श्रीतवीतरागत्वान्मुख्य धनम् यद्वा तत्त्वज्ञानिनोब्रह्मनिष्ठ्याः एकवित्तम् सर्वाधिकत्वान्मुख्यद्रवि-
णम् आत्मसर्वस्वमितियावत् यस्यसतम् पु. की. शरणगा या जनताजनसमूहः तस्य रक्षणे सर्वोपद्रवेभ्योरक्षायाम्

उद्भासिसमुल्लासि सोत्साहमित्यर्थः चित्तश्चेतोयस्यसतम् पु०की० भालेललाटे उल्लासिसम्यक्प्रकाशि इन्दुभित्तश्चन्द्रख-
ण्डंयस्यसतम् भित्तंशकलखण्डेवापुंस्यर्द्धोऽर्द्धंसमेंऽशक इत्यमरः पु०की० त्रिभुवनविनुतंलोकत्रयाभिष्टुतम् पु०की० वेदे-
षुविख्यातानिसुप्रसिद्धानि वृत्तानिचरित्राणियस्यसतम् वृत्तम्पद्येचरित्रेत्रिष्वतीतेदृढनिश्चलेइत्यमरः पु०की० योगीशम्प-
रिपक्वयोगभक्तजनस्वामिनम् पु० की० पार्वतीशंश्रीगौरीशम् पु० की० सुभगाऽत्यन्तमनोहरा या सुरनदीश्रीगङ्गा तया काशि-

तत्त्वज्ञान्येकवित्तं शरणगजनतारक्षणोद्भासिचित्त म्भालोल्लासीन्दुभित्त न्त्रिभुवनविनुतं वेदविख्यातवृत्तम् ।
योगीश म्पार्वतीशं सुभगसुरनदीकाशिकेशं सुरेशं श्रीशम्भो श्रीलसन्तं सति हृदि सतत म्भावयेऽ ह म्भवन्तम् ५५

नोद्दीप्यमानाः केशाः कचायस्यसतम् यद्वा सुभगेलोकोत्तरमहिमप्रभावे ये सुरनदीश्रीगङ्गा काश्येवकाशिकावाराणसीच-
तेतथोक्ते तयोरीशःप्रभुस्तम् पु० की० सुरेशमखिलमघवाद्यमरनियन्तारम् पु० की० अतएव श्रियासर्वाधिकशोभया लस-
न्तमतिप्रकाशमानम् ॥ ५५ ॥ अथाऽद्भुतन्ध्यानान्तरमाह शङ्खमिति अहम् शङ्करंस्वकल्याणकर्त्तारम् श्रीगिरिजाभर्त्तारम्
संस्मरामिध्यायामि कीदृशंशङ्करम् करैः चतुर्भिर्हस्तैः शङ्खङ्कम्बुम् घण्टांस्वर्णादिनिर्म्मितंवाद्यविशेषम् शृङ्गम्मृगविषाणम् ड-
मरुम्प्रसिद्धञ्चर्म्मावनद्धंवाद्यविशेषम् च धारयन्तम् पु० की० हसन्तंस्वतन्त्रत्वात् हासेन प्रमोदम्प्रकटयन्तम् पु० की०

मन्दमन्दंशनैश्शनैः गाम्भीर्य्येणगच्छन्तम् चलन्तम् पु० की० कापिप्रदेशे प्रमदतरभरान्महानन्दातिशयात् उच्चैरत्यन्तम् नृ-
त्यन्तम् तालादिना नर्त्तनङ्कुर्वन्तम् पु० की० पादाघाताभियोगात्पादप्रहारसम्बन्धात् नितान्तमत्यन्तम् धराम्पृथिवीम्
कम्पयन्तञ्चालयन्तम् पु० की० सोल्लासंसहर्षोद्गारम् यद्वा सोल्लासंसोत्साहम् देवसङ्घैरमरसमूहैः प्रणुतम भिष्टुतम् पद-
श्चरणम् कैलासाख्यंस्वनिवासस्थानंवायस्यतम् ॥५६॥ अथातिहृदयङ्गमन्ध्यानान्तरमाह नव्यामिति अहम् श्रीमहेशमहाप्रभुं-



शङ्खं ह्वण्टा ञ्च शृङ्गं ण्डमरु मऽथ करै र्दधारयन्तं हसन्त ङ्गच्छन्तं मन्दमन्द म्प्रमदतरभरा त्का ऽपि नृत्यन्त मुच्चैः।
पादाघाताऽभियोगा त्क चिद पि च धराङ्क म्पयन्तं नितान्तं सोल्लास न्देवसङ्घैः प्रणुतपद मऽहं शङ्करं संस्मरामि ५६

श्रीशङ्करम् स्मरामिध्यायामि कीदृशंमहेशम् नव्यांनवीनाम् सद्यएवावतारिताम् अथच अव्याजभव्यांस्वभावशुभस्वरूपाम्
अथच अतिशितिमत्यन्तकृष्णवर्णाम् अथच अहतिमखण्डिताम् सर्वावयवसम्पूर्णामित्यर्थः नागकृत्तिङ्गजासुरचर्म अजिनञ्च
र्मकृत्तिस्स्त्रीत्यमरः वसानमाच्छादयन्तम् सोत्साहम् पृष्ठप्रदेशे दधानमितियावत् चञ्चतोराकासम्बन्धित्वात् देदीप्यमानस्य
चन्द्रस्यशशिनः अंशवइवकिरणाइव गौरंशुभ्रवर्णम् पु० की० सुरतरुतलगङ्कस्यापिमन्दारादिदेववृक्षाधस्स्थितम् यत्
व्याघ्रचर्म तत्र उपविष्टमासनविशेषेणसमवस्थितम् पञ्चैतेदेवतरवोमन्दारःपारिजातकः सन्तानःकल्पवृक्षश्चपुंसिवाहरि-

चित्तैकाग्र्येणदृष्टेरवस्थितिः तत्रनिष्ठासम्यगासक्तिविशेषोयस्य-
चन्दनमित्यमरः पु० की० अतएव नासाग्रे यत् ध्यानम्
सतम् पु० की० वराः सुवर्णत्वनिर्म्मलत्वादिनाऽतिश्रेष्ठाः वितताविशालाः जटालग्नकचाः यस्यसतम् पु० की० दृशम्
त्रीक्षणान्त्रिनयनम् पु० की० अतएव वीक्षणीयमतिदर्शनीयस्वरूपम् पु० की० देवेन्द्रादिभिश्शक्रादिभिः अर्चितौ तत्तदव-
भरैस्सम्पूजितौ अङ्घ्रीचरणौ यस्यसतम् आदिनायमादिग्रहः पु० की० भुजगैस्सर्वाङ्गभूषणीभूतैरुच्चावचैस्सर्पैः परित-

नव्या मव्याजभव्या मतिशितिमहतीं नागकृत्तिं बसान श्वश्वचन्द्रांशुगौरं सुरतरुतलगव्याघ्रचर्म्मोपविष्टम् ।
नासाग्रध्याननिष्ठं वरविततजटं त्रीक्षणं वीक्षणीयन्देवेन्द्राद्यार्चिताङ्घ्रिं भुजगपरिवृतं श्रीमहेशं स्मरामि ।५७।

स्सर्वतः पादादारभ्यशिरःपर्यन्तम् वृतंव्याप्तम् समलङ्कृतमित्यर्थः ॥ ५७ ॥ अथाऽतिविचित्रन्ध्यानान्तरमाह शान्तमिति
पार्वतीशम् अहम् भजेसेवे हृदयेध्यायामीत्यर्थः कीदृशम्पार्वतीशम् शान्तंसदैकरसत्वान्निरुपद्रवचित्तम् पु० की० निता-
न्तमत्यन्तम् कान्तम् स्वरूपतोऽपिपरमरमणीयम् ध्यानयोग्यमितियावत् पु० की० शरणगतानाञ्जनानाम् स्वान्तदुःखस्य-
महाधेः पुंस्याधिर्म्मानसीव्यथेत्यमरः उद्धृतौसमूलोन्मूलने ईशस्समर्थस्तम् पु० की० सतीनाम् अविनाशशीलत्वात्
अत्युत्तमानाम् सम्प[illegible] दातेवितरणे शक्तस्समर्थस्तम् सम्पद्भूतौगुणोत्कर्षेहारभेदेऽपिदृश्यतेइतिविश्वप्रकाशः

पु० को० विषयसुखेषुस्रक्चन्दनवनितादिसमुपभोगजनितेषुमनस्सन्तुष्टिविशेषेषुशर्म्मसु या रतिरनुरागः आसक्तिरित्यर्थः तत्र सर्वदानित्यम् संविरक्तंसमुपरतम् पु० को० दिशएव वासांसिवस्त्राणि तत्र सानुरागम्प्रीतियुक्तम् पु० को० शिशुशशिमुकुटम्बालचन्द्रकिरीटम् पु० को० चारुभस्माङ्गरागंसुभगविभूतिविलेपनम् अङ्गरागोविलेपनमित्यमरः पु० को० सर्प्पेन्द्रोरूपवीतंवासुकिमहायज्ञसूत्रम् पु० को० त्रयाणांनयनानांसमाहारस्तेन सुभगमतिसुन्दरम् त्रिनयनेत्यत्र गात्राद्यन्ताम्नेति

॥ ३२ ॥

शान्त क्षान्तं नितान्तं शरणगतजनस्वान्तदुःखोद्धृतीशं सत्सम्पदानशक्तं विषयसुखरतौ सर्वदा संविरक्तम् ।
दिग्वाससानुरागं शिशुशशिमुकुट श्चारुभस्माङ्गरागं सर्प्पेन्द्रोरूपवीत न्त्रिनयनसुभग म्पार्वतीश म्भजेऽहम् ।५८।

वार्त्तिकान्नङीप् यद्वा त्रीणिनयनानियस्य सचासौसुभगश्चेतितम् अत्रत्रिदृगतिसुभगमितिवापाठः ॥ ५८ ॥ अथ ध्यानान्तरमाह श्रीशम्भोइति हेश्रीशम्भो हेचन्द्रमौले हेस्फटिकवररुचे अतिशुभ्रत्वात् स्फटिकस्यवररुचिरिववररुचिर्यस्य यद्वा स्फटिकवरस्यरुचिरिवरुचिर्य्यस्य तत्सम्बुद्धौ यद्वा स्पटिकादपिश्रेष्ठकान्ते हेकोटिकन्दर्प्पकान्ते असङ्ख्यातमदनलावण्य ॥ ३२ ॥
हेश्रीगङ्गासत्तरङ्गप्रलसदुरुजट श्रीसुरधुनीसुभगलहरीदेदीप्यमानमहाजटाक हेत्र्यक्षत्रिनेत्र हेवेदैकपक्ष श्रुत्येकसहाय सर्वनिगमरक्षावद्धपरिकरोतियावत् हेदेवदेव सकलामरपूज्य हेस्वीयरक्षैकदक्षनिजभक्तजनपालनैकपरायण त्वाम् त्यक्त्वा-

विहाय अनादृत्येतियावत् इतरम्भवदन्यम् शरण्यंशरणागतसाधुम् वरेण्यंवरणीयम् समाश्रयणीयामित्यर्थः प्रभुम् कर्त्तुमकर्त्तुमन्यथाकर्त्तुंसमर्थम् कन्देवादिकम् भक्तिभावाद्भक्त्यतिरेकात् अहम् संसेवेभजे ध्यायामि करुणयाकृपया इतित्वम् निगद ब्रूहि भगवन्तम्भवन्तंविहाय अन्यत्र क्वापिममभक्तिर्नोज्जृम्भते इतिभावः ॥ ५९ ॥ अथध्यानान्तरमाह सर्वाङ्गोपाङ्गभूषमिति अहम् सततमनिशम् हृदिविश्वनाथम् सन्दधेधारयामि कीदृशंविश्वनाथम् सर्वेषुनिखिलेषु अङ्गेषुपादादिष्व-

श्रीशम्भो चन्द्रमौले स्फटिकवररुचे कोटिकन्दर्प्पकान्ते श्रीगङ्गासत्तरङ्गप्रलसदुरुजट त्र्यक्ष वेदैकपक्ष ।
त्यक्त्वा त्वा न्देवदेव प्रभु मितर मह ङ्कं शरण्यं वरेण्यं संसेवे भक्तिभावा न्निगद करुणया स्वीयरक्षैकदक्ष ।५९।

वयवेषु उपाङ्गेषु अङ्गुल्यादिषुच भूषाभूषणानि दिव्यानि कटककुण्डलोर्म्मिकादीनियस्यसतम् सर्वाङ्गोत्तुङ्गभूषमितिपाठे सर्वाऽवयवोत्तमभूषणमित्यर्थः सर्वाङ्गाऽभङ्गभूषमितिपाठे सर्वाऽवयवसर्वभूषणंसर्वावयवाखण्डितभूषणंवेत्यर्थः सर्वाङ्गाऽपाङ्ग भूषणमितिपाठे सर्वेष्वङ्गेष्ववयवेषुअपाङ्गौनेत्रान्तौ भूषा लोकोत्तरचमत्कारमनोहरत्वात् भूषणंयस्यसः तमित्यर्थः सर्वाङ्गाऽसङ्गभूषमितिपाठे सर्वेष्वङ्गेष्ववयवेषु असङ्गास्स्रावकाशाः आसङ्गाअतिसङ्कटावा भूषाभूषणानियस्यसतम् पु० की० सितभसितवृतमतिशुभ्रभूतिभूषितम् पु० की० स्वर्णवर्णाः सदैवभस्मसंसर्गात् काञ्चनप्रभाः

उरवोविपुलाः केशाः कचाः यस्य सतम् वड्रोरुविपुलमित्यमरः पु० की० स्वस्थंनिरुपद्रवचित्तम् पु० की० यतः पद्मास-
नस्थम् बद्धपद्मासनम् पु० की० रुचिरतररुचिमतिदीप्तदीप्तिम् पु० की० सूर्यचन्द्राग्नयोनेत्राणियस्यसतम् पु० की० मा-
दृक्षाणांमत्सदृशानाम् अनन्यगतिकानाम् उद्धारेसंसारापगमे दक्षःकुशलस्तम् पु० की० स्वविमुखमनसांस्वपराङ्मुख-
चेतसाम् निजनिन्दकानाञ्जनानामितियावत् सम्बन्धिनाम् श्रेयसाङ्कल्याणानाम् श्वश्श्रेयसंशिवम्भद्रङ्कल्याणंमङ्गलंशुभ-



सर्वाङ्गोपाङ्गभूषं सितभसितवृतं स्वर्णवर्णोरुकेशं स्वस्थ म्पद्मासनस्थं रुचिरतररुचिं सूर्यचन्द्राग्निनेत्रम् ।
मादृक्षोद्धारदक्षं स्वविमुखमनसां श्रेयसां सद्विपक्षन्दीनानाथैकनाथं हृदि सतत मऽहं सन्दधे विश्वनाथम् ।६०।

मित्यमरः सद्विपक्षमतिशत्रुम् पु० की० दीनानामकिञ्चनत्वादिना सशोकमनसाम् अनाथानामरक्षकाणाञ्च जनानाम्
एकनाथङ्केवलपालकम् एकेमुख्यान्यकेवलाइत्यमरः ॥ ६० ॥ अथरुचिरतरन्ध्यानान्तरमाह सत्यमिति हेशिव भक्तशिव-
कारक भक्तितोनतुलोभादितः त्वाम्भवन्तम् सततंनिरन्तरम् अहम् स्मरामिध्यायामि कीदृशन्त्वाम् सत्यङ्कालत्रयाऽबा-
ध्यम् पु. की. सत्योऽविनाशी प्रभावःप्रभुत्वम् यस्यसतम् पु. की. सद्भिरुत्तमैर्भक्तजनैः ब्रह्माविष्णुशक्रादिभिर्वा अभिनुत-
मभिष्टुतम् पदंस्थानम् शिवलोकस्वरूपम् अभिनुतेपदेचरणारविन्देवायस्यसतम् पु. की. सत्यलोकप्रदात्ब्रह्मलोकादि-

निवासदायिनी अर्चा बिल्वपत्रादिमात्रकृतापूजा यस्यसतम् पु. की. सत्यासदैकरसा उल्लासिनी नवनवोन्मेषशोभिनी प्रतिष्ठागौरवविशेषोयस्यसतम् पु. की. अतएव लसत्प्रकाशमानम् उरुमहत् यशोयस्यसतम् पु. की. सन् श्लाघनीयः स्वभावश्शीलंयस्यसतम् शरणागततोषकारिचरित्रमित्यर्थः पु. की. सत् शास्त्रप्रतिपादितम् ऐक्यन्द्वैतशून्यत्वंयस्यसतम् पु. की. गौर्याः श्रीपार्वत्याः नेत्राम्बुजयोर्नयनकमलयोः अर्कः विकाशकत्वात्प्रातर्म्मार्तण्डइवसतम् पु. की. सुरपतिमुकुटैः

सत्यं सत्यप्रभावं सदभिनुतपदं सत्यलोकप्रदार्च्चं सत्योल्लासिप्रतिष्ठं लसदुरुयशसं सत्स्वभावं सदैक्यम् ।
गौरीनेत्राम्बुजार्कं सुरपतिमुकुटस्पृष्टपादाब्जपीठन्त्र्यक्षश्चन्द्रार्धमौलिं शिवसतत महंभक्तित स्त्वां स्मरामि ।६१।

दर्शनार्थागतेन्द्रादिनिर्ज्जरवराकिरीटैः स्पृष्टम् प्रणामावसरेकृतस्पर्शम् पादाब्जपीठश्चरणकमलासनंयस्यसतम् पीठमासनमित्यमरः विष्टरःपीठमस्त्रियामितित्रिकाण्डशेषः पु. की. त्र्यक्षन्त्रिलोचनम् पु. की. चन्द्रार्द्धमौलिम्बालेन्दुमुकुटम् ॥ ६१ ॥
अथध्यानान्तरमाह एकेति अहम् श्रीगिरीशमतिशोभमानकैलासाधिपतिम् श्रीशङ्करम् भजेसेवे ध्यायामीतियावत् कीदृशंश्रीगिरीशम् राकारात्रीशगौरम् पूर्णचन्द्रशुभ्रम् पु. की. बहुलतरजटम् अतुलजटाकम् व्रतिनस्तुसजाजटेत्यमरः पु. की. नागयज्ञोपवीतंवासुकियज्ञसूत्रम् पु. की. सर्प्पाएवभुजगाएव अलङ्काराभूषणानिनेपथ्यंवा तैस्तेनवा दीप्तमतिप्रकाशितम्

सर्वालङ्कारदीप्तमितिपाठे सकलभूषणभूषितमित्यर्थः पु. की. धृतशिशुशशिनम्बालेन्दुभूषितमस्तकम् पु. की. चन्द्रसूर्य्या-
नलाक्षमिन्दुरविवह्निनयनन् पु. की. देवैः अदेवैरसुरैश्च आदिनामानवादिभिश्च वन्द्योनमस्करणीयस्तम् पु. की. प्रमथैः
स्स्वगणैः परिवृतम्परितोव्याप्तम् पु. की. किन्नराद्यैःकिन्नरप्रभृतिभिः उपगीतमुपगानेनसम्भावितम् पु. की. गम्भीरमि-
तराऽलक्ष्याशयम् उदारंमहत् चित्तञ्चेतोयस्यसतम् पु. की. स्वधनमात्मसर्वस्वम् पु. की. अनिधनमविनाशिनम् ॥ ६२ ॥



राकारात्रीशगौरं म्बहुलतरजटं नागयज्ञोपवीतं सर्प्पालङ्कारदीप्त न्धृतशिशुशशिन श्चन्द्रसूर्य्यानलाक्षम् ।
देवादेवादिवन्द्य म्प्रमथपरिवृत ङ्किन्नराद्योपगीत ङ्गम्भीरोदारचित्तं स्वधन मनिधनं श्रीगिरीश म्भजेऽहम् ।६२।

अथ ध्यानान्तरमाह वाचालमिति हेदयालोसानुकम्प हेकालारेश्रीमृत्युञ्जय वाचालम्बहुगर्ह्यवाचम् व्यर्थाऽप्रकृतभाषि-
णम् स्याज्जल्पाकस्तुवाचालोवाचाटोबहुगर्ह्यवागित्यमरः स्वीयबालमात्मपृथुकम् कृपापात्रमित्यर्थः बह्वयोऽसङ्ख्याताः
विकलाःप्रकृतविरुद्धाः कलामतिस्फूर्त्तिविशेषाः यस्ययस्मिन्वा सतम् पु. की. वृत्त्यावृत्तौवा अरालःकुटिलः सर्वत्रविरु-
द्धाचरणस्तम् पु. की. खलेषुदुर्ज्जनेषु उल्लासीमहोत्साहः मल्लोबाहुयुद्धकुशलस्तम् अतएव चितानिसमर्ज्जितानि दुरि-
तानिपापान्येवमलानियेनसतम् यद्वा अलमत्यन्तम् चितदुरितम् माम् अलमतिशयेनवा पालयरक्ष मम सर्वानुपद्रवान्

त्वम् परिहरेत्यर्थः अथचबालेन्दुभ्राजिभालंशिशुशशिशोऽभितमस्तकम् गरलेनसामुद्रेणविषेण शितिः श्यामः गलःक-
ण्ठोयस्यसतम् प्रोल्लसन्नतीवकान्तिरम्यः नागएव मालास्रग्यस्यसतम् राजन्प्रकाशमानः योरात्रीशश्चन्द्रमाः तस्यदी-
प्तिरिवदीप्तिः प्रकाशोयस्यसतम् सकलसुरगुरुमखिलेन्द्रादिदेवसम्पूजितपादारविन्दम् त्वाम्भवन्तम् अजस्रम् ध्यानाव-
सरेसदैवहृदि ध्यानार्हेहृदयावकाशे दधेधारयामि भवद्ध्यानपरायणोभवामीत्यर्थः ॥ ६३ ॥ अथध्यानान्तरमाह श्रीमन्निति

वाचालं स्वीयबाल म्बहुविकलकलंद्रुत्यराल न्दयालो कालारे पालयाऽल श्चितदुरितमलं मा ज्ज्वलोल्लासिमल्लम् ।
बालेन्दुभ्राजिभाल ङ्गरलशितिगल म्प्रोल्लसन्नागमालं राजद्रात्रीशदीप्तिं सकलसुरगुरु न्त्वा न्दधे हृद्य जस्रम् ।६३।

हेश्रीमन्पूर्णैश्वर्य हेमीनध्वजारे गुरुतरदर्प्पकन्दर्पशत्रो तम् त्वाम्भवन्तम् हृदिध्यानार्हेहृदयावकाशे अहम् धारयामि धृत्वा-
संस्मरामि तङ्कम् सुविधिमनुसरन् सुप्रकारंरचयन् इत्यस्यसर्वत्रान्वयः यस्त्वम् अखिलंसकलम् इदन्दृश्यम् जगद्विश्वम्
ब्रह्मरूपश्चतुराननविग्रहोभूत्वा विधत्से जगदुत्पत्यवरे कुरुषे विरचयसीत्यर्थः अथच श्रीविष्णुरूपोवैकुण्ठाधिपतिस्वरूपो-
भूत्वा पासिरक्षसि रुद्रोभूत्वाअत्सिभक्षसि विनाशयसीतियावत् कीदृशन्त्वाम् त्रैलोक्यनाथम् त्रिभुवनाधिपतिम् पु. की.
निजानामात्मीयानाम् भक्तानामित्यर्थः विपदोनानाविधाविपत्तीः अपहन्तिसमूलमुन्मूलयतीतियावत् तथाभूतस्तम् पु.

की. सद्वृहद्वैभवाढ्यमविनाशिमहाप्रभावम् पु. की. एवम्भूतमपि दिग्वस्त्रन्दिगम्बरम् निरञ्जनस्वरूपमित्यर्थः पु. की. दिव्यानिभक्तजनमनोहराणि दुष्टजनभयङ्कराणि शस्त्राणित्रिशूलपरश्वधादीन्यायुधानियस्यसतथोक्तस्तम् पु. की. त्रिदशन्त्रिनेत्रम् पु. की. अभयदंसंसारदुःखहरत्वान्निर्भयपदप्रदातारम् ॥ ६४ ॥ अथध्यानान्तरमाह सम्पत्त्येति हेदेवस्वप्रका-

श्रीमन्मीनध्वजारे जग दिद मऽखिल म्ब्रह्मरूपो विधत्से पासि श्रीविष्णुरूपस्सुविधिमऽनुसरन्नत्सि भूत्वाऽथरुद्रः ।
त न्त्वा न्त्रैलोक्यनाथं निजविपदपहं सद्वृहद्वैभवाढ्य न्दिग्वस्त्र न्दिव्यशस्त्र न्त्रिदशम भयदं हृद्य ह न्धारयामि ।६४

सम्पत्त्यादेवदैव्या परमाशिवदयासंविहीनोऽतिदीनोऽलीनोऽर्थेऽना त्मनीनो गुरुदुरितभरै स्सर्वदैवास्मिपीनः ।
श्रीगौरीभूषिताङ्ग म्बृषगुहगणपै स्ससम्मुखस्थैस्सुशोभंनानाऽलङ्काररराजद्वपुषमतिसितं शङ्करत्वाम्भजेऽहम् ।६५।

शिन् अहम् लक्ष्मीनारायणोभवदनन्यभक्तः परमशिवदयासंसारदुःखहर्त्र्या दैव्याध्यानधारणादिरूपया सम्पत्त्या । संविहीनस्सांसारिकव्यवहारैकातिसक्तइत्यर्थः तथा अतएव अतिदीनोदैन्यपरायणः तथा अतएव अर्थेधनेस्वप्रयोजने वा अर्थःप्रकारेविषयेवित्तकारणवस्तुषु अभिधेयेचशब्दानांवृत्तौचापिप्रयोजने इतिविश्वप्रकाशः लीनोऽत्यन्ताभिनि-

विष्टः तथा अतएव अनात्मनीनस्स्वहितपराङ्मुखः तथा अतएव सर्वदैव गुरुदुरितभरैर्बृहद्दुष्कृतातिशयैः पीनः पुष्टः सम्भृतइत्यर्थः अस्मीत्यस्यसर्वत्रान्वयः अतएव हेशङ्करभक्तजनकल्याणैकनिदानश्रीमहेश्वर त्वाम् भगवन्तम्भवन्तम् भजे-सेवे कीदृशन्त्वाम् श्रीगौर्यागिरिराजात्मजया भूषितोऽलङ्कृतः अङ्कउत्सङ्गोयस्यसतम् पु. की. सम्मुखस्थैःपुरस्स्थितैः वृषगुहगणपैर्वृषभकार्त्तिकेयश्रीगणपतिभिः सुशोभमत्यन्तराजमानम् पु. की. नानालङ्कारैर्बहुविधैर्भूषणैः राजदतिशोभ-

लीनम्पापेषु दीनम्भवति सुकृतिताशून्य मूनंसुमत्या सत्योच्चैश्चित्तवृत्त्या समव गिरिश मां स्वं शिशुंश्रीपुरारे ।
प्रीत्या शास्त्रोक्तरीत्या तव पदकमलं संश्रये दुःखभीत्या बालेन्दुभ्राजिभाल त्रिनयन करुणां मय्युदारां निधेहि ।६६।

मानम् वपुःकोटिकन्दर्पलावण्यंशरीरंयस्यसतम् पु. की. अतिसितमनन्तशारदराकासुधाकरशुभ्रवर्णम् ॥ ६५ ॥ अथ सप्रार्थनन्ध्यानान्तरमाह लीनमिति हेगिरिश हेकैलासपर्वतराजनिवासैकप्रियमहेश्वर स्वमात्मीयम् शिशुम्बालम् रक्षार्हमित्यर्थः मांलक्ष्मीनारायणम् समवसंसारदुःखात् रक्ष कीदृशंमाम् पापेषुदुरितेषु लीनंनिरतम् पु. की. भवति-भगवतित्वयिदीनम् पु. की. सुकृततया धर्म्मितया शून्यंविरहितम् पु. की. सुमत्या धर्म्मबुद्ध्या सत्याश्रेष्ठया उच्चैर्म्म-हत्या चित्तवृत्त्याच ऊनंहीनम् अथच हेपुरारेत्रिपुरासुरशत्रो दुःखभीत्यानानाविधक्लेशभयेनहेतुना प्रीत्याऽनुरागेण

श्री शं०

भक्त्येत्यर्थः शास्त्रोक्तरीत्या शास्त्रमर्यादयातव सर्वसमर्थस्यभगवतोभवतः पदकमलञ्चरणारविन्दम् संश्रये सर्वकार्य-साधनाधिकारित्वेन हृदि स्थापयामि अथच हेबालेन्दुभ्राजिभालचन्द्रशेखर हेत्रिनयनत्रिलोकीरक्षणार्थम् धृतत्रिनेत्र उदारांमहतीम् करुणाङ्कृपाम् मयि निधेहि स्थापय ॥ ६६ ॥ सुभगतरध्यानान्तरमाह हस्तेष्विति हेगिरिशकैलासवा-सिन् श्रीशङ्कर सन्ततमविरतम् त्वाम्भगवन्तम्भवन्तम् संस्मरामिसम्यग्ध्यायामि कीदृशन्त्वाम् गिरजयाश्रीपार्वत्यापा-

हस्तेष्वा धाय शूलण्डमर मऽथ मृगं सत्कपालं विशालं पृष्ठे कुम्भीन्द्रकृत्तिं गरल मऽपि गले चारुरेखात्रयाढ्ये।
चन्द्रं भाले समाले शिरसि सुरुचिरे जाटजूटं सगङ्गं राजन्त न्त्वां हसन्तं गिरिश गिरिजया सन्ततं संस्मरामि।६७॥

॥ ३६ ॥

र्श्वस्थया राजन्तंशोभमानम् पु. की. अतएव हसन्तंसस्मितम् किङ्कृत्वा हस्तेषुचतुर्षुकरेषु शूलन्त्रिशूलम् शस्त्रवि-शेषम् डमरुञ्चर्मावनद्धंवाद्यविशेषम् अथच मृगंहरिणम् अथच विशालमतिविस्तृतम् सदत्युत्तमम् सतस्सकलदेवप्रव-रस्य श्रीब्रह्मदेवस्यवा कपालंशिरोऽस्थि कोटिब्रह्माण्डाधिपत्येसत्यपि भिक्षुकचिह्नमितियावत् अथच पृष्ठे कुम्भीन्द्रकृ-त्तिङ्गजविग्रहासुरवरविशेषचर्म्म अपिच चारुरेखात्रयाढ्येचारुतररेखात्रयशोभिते गलेकण्ठे गरलम् महोपद्रवहेतुंसैन्ध-वंविषम् अथच समालेदेवपुष्पस्रगतिमनोहरे भालेललाटे चन्द्रंशिशुशशिनम् सुरुचिरेस्वभावतएवातिबन्धुरे शिरसि-

ध्या०

॥ ३६ ॥

मूर्द्धप्रदेशे सगङ्गंश्रीगङ्गयाऽतिभ्राजमानम् जाटजूटजटासम्बन्धिनम्बन्धविशेषम् आधायधृत्वा इत्यस्यसर्वत्रान्वयः एतानिधृत्वाराजन्तम् गिरिजया सह हसन्तमिति ॥ ६७ ॥ ध्यानान्तरमाह प्रोद्दण्डेति अहम् शङ्करंश्रीमहेशम् संस्मराभि-सम्यग्ध्यायामि कीदृशंशङ्करम् प्रोद्दण्डैरत्युत्कटैः अतिप्रचण्डैरनिवारणीयैः प्रबलतरै रतीवोद्धुरैः लसद्भिरत्यन्तोद्बुद्धैः पापैः परापकारादिभिर्दुरितैः कृत्वा यस्सन्तापः मानसःकायिकश्च दुःखविशेषः तम् हरतिदूरीकरोतीतितथोक्तस्सतम्

प्रोद्दण्डातिप्रचण्डप्रबलतरलसत्पापसन्तापहारं शक्राऽनास्वादिताश्वत्सुकृतवरजनुस्सौख्यसम्भारकारम् ।
संसाराऽपारदुःखक्षयकरमऽजरं नागराजोरुहारं सद्योजातेन्दुधारञ्जटिलमकुटिलं शङ्करं संस्मरामि ॥६८॥

कर्म्मण्यण् पु० की० शक्रेणापिदेवेन्द्रेणापि अन्येषाम् काकथा अनास्वादितमननुभूतम् अश्वदतिप्रशंसनीयम् सुकृतवरेभ्यो-ऽत्युत्तमपुण्येभ्यः जनुर्जन्मयस्यतथाभूतः यः सुखान्येवसौख्यानि स्वार्थेष्यञ् तेषांसम्भारस्समूहः तम् करोतीतितथा-भूतस्तम् कर्म्मण्यण् पु० की० संसारेसंसारस्यवा अपाराण्यनन्तानि दुःखानि तेषाम् यः क्षयस्समूलोन्मूलनम् तस्य करो-विधायकस्तम् करइति पचाद्यचिरूपम् पु० की० अजरंसर्वदैकरसम् पु० की० नागराजएव उरुर्म्महान् हारोयस्यतम् पु० की० सद्योजातेन्दुम्बालचन्द्रम् धरतीतितथाभूतम् कर्म्मण्यण् पु० की० जटिलजटाधारिणम् पु० की० अकुटिलम्

 

सर्वज्ञसर्वदेव सरलस्वभावम् ॥ ६८ ॥ ध्यानान्तरमाह राजदिति भोहरनिजजनदुःखहारक भोःपुरहर त्रिपुरासुरशत्रो शङ्कर तम् भवन्तन्त्वाम् भक्तिभावात् स्मरामिध्यायामि कन्तन्त्वाम् यस्यतव महोक्षोमहावृषभः राजदतिप्रकाशमानम् पत्रंवाहनम् अस्तीतिशेषस्सर्वत्र अथ पु० की० कन्तन्त्वाम् यस्यतव दिशोवसनंवस्त्रम् पु० कन्तन्त्वाम् यस्यतव भोगिनस्सर्प्पाः भूषाभूषणानि पु० कं० जाटोजटासम्बन्धी जूटोबन्धविशेषः किरीटंमुकुटम् अथ पु० तिलकंविधुर्बालचन्द्रः पु०



राजत्पत्रं महोक्षो वसन मऽथ दिशो भोगिनो यस्य भूषा जाटो जूटः किरीट न्तिलक मथ विधु र्भस्म रम्यो ऽङ्गरागः ।
खट्वाङ्ग ङ्कम्य मऽस्त्र ङ्गरल मऽथ मणि र्दीप्तिमा निन्द्रनील स्तं श्रीमन्तम्भवन्तं हर पुरहर भो भक्तिभावा त्स्मरामि ६९

रम्योदर्शनीयः अङ्गरागोविलेपनम् भस्मकन्दर्प्पशरीरभसितम् पु० षट्वाङ्गंनरपञ्जरंनाम कम्यमतिरमणीयम् अस्त्रम् मन्त्रप्रयोगार्हः शस्त्रविशेषः अथपु० गरलमब्धिजमतिदुस्सहविषम् दीप्तिमान्स्फुरज्ज्वालजालत्वादतिप्रशस्तप्रकाशशोभी इन्द्रनीलइन्द्रनीलनामकः मणिःकण्ठभूषणंरत्नविशेषः कीदृशम्भवन्तम् श्रीमन्तमखिलब्रह्माण्डैश्वर्यविराजमानम् ॥ ६९ ॥ अथध्यानान्तरमाह दृष्ट्वेति हेसगुरुदयहेतरुणकरुणाशालिन् हेगुरोहेसर्ववर सगुरुदयानाङ्गुरुः तत्सम्बुद्धौ हेसगुरुदयगुरो इतिवैकम्पदम् हेगौरकान्ते हेशारदराकासुधाकररुचे हेसुवसते हेकैलासादिशोभनसदन शान्तिकान्तेशमरमणीये

मे मम स्वान्तेहृदये चित्तन्तुचेतोहृदयंस्वान्तंहृन्मानसंमनइत्यमरः निशान्तेसदने वसतिस्स्यादवस्थानेनिशायांसदने-
ऽपिचेति निशान्तस्सदनेशान्तेप्रभातेऽपीतिचहेमचन्द्रः निवसनितराम् त्वम् वासम् कुरु अथच तत्रस्थितावासनाः
नानाविधाःप्रत्याशाः तत्तत्पदार्थलाभाभिलाषानितियावत् अज्ञानानिवा आशुझटिति अस्मिन्नेवजन्मनीत्यर्थः नाशयदूरी-
कुरु अथवासनम् वारिधान्याश्ववस्त्रेचप्रत्याशाऽज्ञानयोस्स्त्रियामितिमेदिनी अथच हेकैलासाधीश्वर गिरिवरतनयाऽल-

दृष्ट्वा दैन्यं मदीयं सगुरुदय गुरो गौरकान्ते निशान्ते स्वान्ते मे शान्तिकान्ते निवस सुवसते वासना नाशया शु।
कैलासाधीश्वरत्वाङ्गिरिवरतनयाऽलङ्कताऽदाक्षिणाङ्कन्दिव्यालङ्काररम्यं श्रुतिरुचिररसास्वादगम्यम्भजेऽहम् ७०

ङ्कृताऽदक्षिणाङ्कं श्रीपार्वतीविभूषितवामोत्सङ्गभागम् अथच दिव्यालङ्काररम्यमलौकिकभूषणभूषितम् अथच श्रुतिरुचि-
ररसास्वादेनोपनिषदर्थपरिशीलनेन गम्यःप्राप्यः तन्तथोक्तम् त्वाम्भगवन्तम्भवन्तम् अहम् भजेसेवे ध्यायामीत्यर्थः ॥७०॥
अथध्यानान्तरमाह धैर्य्यौदार्य्यादीति धैर्य्यौदार्यादयः नानाविधाबहुप्रकाराः विमलादोषमलविरहिताः ये गुणाः तेषाम्
येग्रामाः वृन्दानि अथग्रामोवृन्देशब्दादिपूर्वकः षड्जादौसंवसथेचेतिहेमचन्द्रः तेषाम् ये धामानिस्थानानि आश्रयामहा-
त्मानोजना तैः अर्चितौ[illegible]तौ अ[illegible]चरणौयस्य तत्सम्बुद्धौ धामदेहगृहेरश्मौस्थानेजन्मप्रभावयोरितिमेदिनी तथाच

कान्तारस्थामहारण्यनिवासिनः महारण्येदुर्गपथेकान्तारम्पुन्नपुंसकमित्यमरः अथच स्थिरान्तर्ज्ञिताचित्ताः येमुनिजनाः तपस्विजनाः तैः सु योगशास्त्रानुकूलत्वात् शोभनेन विधिना ध्यातन्ध्यानविषयीकृतम् विख्यातम् श्रुतिस्मृतिपुराणागमादिप्रसिद्धम् रूपमाकारोयस्यसतथोक्तस्तत्सम्बुद्धौ रूपंश्लोकशब्दयोः पशावाकारेसौन्दर्येनाणकेनाटकादिके ग्रन्थावृत्तौस्वभावेचेतिहेमचन्द्रः होविश्वनाथ पञ्चक्रोशात्मकज्योतिर्लिङ्गस्वरूपश्रीकासिकापते त्वाम्भगवन्तम्भवन्तम् अहम्



धैर्य्यौदार्य्यादिनानाविधविमलगुणग्रामधामार्चिताङ्घ्रे कान्तारस्थस्थिरान्तर्मुनिजनसुविधिध्यातविख्यातरूप।
भक्तोद्धारानुरक्तं शरणगजनिमद्रक्षणातिप्रसक्त म्ब्रह्माण्डाधीशमीशं वरभसितसितन्त्वा म्भजे विश्वनाथ ।७१।

भवदेकपरायणोलक्ष्मीनारायणोनाम भजेसेवे ध्यायामीत्यर्थः कीदृशन्त्वाम् भक्तानां स्वभजनानुरक्तानाम् उद्धारेसंसारनिवर्त्तने अनुरक्तस्सोत्साहस्तम् पु० की० शरणगायेजनिमन्तोजन्मिनः प्राणिनइतियावत् तेषाम् रक्षणेसर्वोपद्रवेभ्योरक्षायाम् अतिप्रसक्तोऽत्यन्तदत्तचित्तः सतथोक्तस्तम् पु० की० ब्रह्माण्डाधीशन्त्रिभुवनाधिपतिम् पु० की० यतः ईशंसर्वसमर्थम् पु० की० वरेणप्रवलतरारिदर्प्पकसम्बन्धित्वादुत्तमेन भसितेसर्वाङ्गशोभिना भस्मना अतिशुभ्रम् ॥ ७१ ॥ अथध्यानान्तनमाह श्रीति श्रीमहेशः सर्वदा मम हृदिहृदये वसतात्तिष्ठतु ध्यानगम्योभवत्वित्यर्थः कीदृशोमहेशः श्रीमान्कोटिक-

न्दर्प्पलावण्यः पु० की० आजानुबाहुर्ज्जानुपर्य्यन्तलम्बमानभुजः पु० की० वितताविस्तृतासर्वदिक्प्रसारिणी कनकस्यस्व-र्णस्य भाइवभादीप्तिर्यस्यसतथोक्तः पु. की. पृष्ठदेशावलम्बिनी स्फूर्ज्जताम्प्रकाशमानानाम् केशानाम् छटायस्यसतथोक्तः बहुव्रीहौकप् पु. की. करेहस्ते धृतोडमरुर्य्येन सतथोक्तः पु. की. चन्द्रस्य चञ्चन्तीप्रकाशमाना कलायस्य सतथोक्तः पूर्ववत्कप् भालबालकलाधरइत्यर्थः पु. की. भोगीन्द्रस्यसर्प्पराजस्य उदुच्चैर्म्महान् योभोगश्शरीरम् तेन शोभि प्रवित-

श्रीमानाऽऽजानुबाहु र्विततकनकभाः पृष्ठदेशावलम्बिस्फूर्ज्जत्केशच्छटाकः करधृतडमरु श्चन्द्रचञ्चत्कलाकः ।
भोगीन्द्रोद्भोगशोभि प्रविततसदुरा नीलकण्ठो महोच्चैर्दीप्ताङ्गोगौरदीप्ति र्म्मम हृदि वसता त्सर्वदा श्रीमहेशः।७२।

तमतिविशालम् अतएव सच्छ्रेष्ठम् उरोवक्षस्स्थलंयस्यसतथोक्तः पु० की० नीलकण्ठः धृतगरलत्वात् श्यामलगलः पु० की० महद्विपुलम् उच्चैरुन्नतम् दीप्तंस्वप्रभाप्रभासितम् अङ्गंशरीरंयस्यसतथोक्तः पु० की० गौरदीप्तिश्शुभ्रकान्तिः॥७२॥ अथध्यानान्तरमाह दिगिति हेशङ्करहेस्वभक्तकल्याणकर त्वाम्भवन्तम् स्मरामि अहम् ध्यायामि कीदृशन्त्वाम् दिशएव प्रावारः उपरिवस्त्रम् तम् वसानमाच्छादयन्तम् धारयन्तमित्यर्थः द्वौप्रावारोत्तरासङ्गौसमौवृहतिकातथा संव्यानमुत्तरी-यञ्चेत्यमरः पु० की० वृषभवरस्य यत् महद्विशालम् पृष्ठम् तत्र यानिष्ठाऽवस्थानम् तस्याम् एकतानस्सर्वदानुरागी तम्

यद्वा
पु० की० वर्षिष्ठंसर्वादित्वाददतिवृद्धम् पु० की० शान्तानिरुपद्रवाःनिष्ठानिष्पत्तयः सकलसिद्धिलाभाः यस्यतम्
शान्तानिवृत्ता निष्ठानाशः अन्तोऽवसानं वा यस्य सतम् निष्ठानिष्पत्तिनाशान्तयाञ्चातिवर्हणेषुचेतिमेदिनी पु० की०
दिविषद्भिरिन्द्रादिभिर्देवैः अभिनुतमभिष्टुतम् पु० की० सर्वदैव नूतनम् नवीनम् सर्वदैकरसत्वाज्जीर्णताविरहितम् पु०
की० भोगेनस्वशरीरेण अश्नुन्तोदेदीप्यमानाः येभोगिनस्सर्प्पाः तएव भूषाः कटककुण्डलादीनिभूषणानियस्यसतम् पु०

दिक्प्रावारं वसान म्बृषभवरमहापृष्ठनिष्ठैकतानं वर्षिष्ठं शान्तनिष्ठ न्दिविषदभिनुतं नूतनं सर्वदैव ।
भोगाश्नद्भोगिभूष म्भवभयजयिनं स्वार्चकाना मऽजस्र न्देवस्त्रीचारुगौरीसहचर मऽजरं शङ्कर त्वां स्मरामि।७३।

कीं० अजस्रंनिरन्तरम् स्वार्च्चकानामात्मसेवकानाम् भवभयजयिनंसंसारापारदुःखभीतिविनाशिनम् पु० की० अजस्रम्
देवस्त्रीभिः परिचर्य्यार्थसहचारिणीभिर्देवाङ्गनाभिः चारुरतिशोभमाना या गौरीश्रीपार्वती तस्याः सहचरम् स्वच्छन्दचङ्-
क्रमणावसरे सहचारिणम् पु० की० यतोऽजरम् अदृष्टजरावस्थम् ॥ ७३ ॥ अथ ध्यानान्तरमाह सङ्गमिति हेस्मरारे हेम-
दनध्वंसक मेमम दुर्ज्जनानाङ्खलानाम् पिशुनोदुर्ज्जनःखलइत्यमरः सङ्गंसम्बन्धम् त्वम् नाशयदूरीकुरु कदाचिदपिममदु-
र्ज्जनसंसर्ग्गोनभवत्वित्यर्थः अथच सुखहृताम् दर्शनादिना दुःखदायिनान् अथच निर्विद्यानांमूर्खानाम् अथच अतीवा-

त्यन्तम् प्रहताप्रणष्टा कृताकुशला धीर्बुद्धिर्यैषान्तेषाम् अथच आग्रहैकप्रियाणाम् शुष्कहठैकानुरागिणाम् मम सङ्गम् त्वम् नाशय अथच हेशम्भो त्वम् मेमम शम्भावकोमोक्षाभिन्नकल्याणविधायकः भव अथच हेभवसर्वदैकसत्ताक हेहर निजजनसकलक्लेशहारक भोश्चन्द्रमौले भोबालचन्द्रभाल हेपुरारेहेत्रिपुरासुरशत्रो हेभस्मालङ्कारभव्यहेविभूतिभूषणभूषित यद्वा हेभस्मनाविभूत्या अलङ्कारणादेव्यकिटककुण्डलहारादसम्पादितेननेपथ्येनच भव्यसुन्दर हेत्रिदृक्त्रिनेत्र इहा-

सङ्गं मे दुर्ज्जना नामऽथ च सुखहृतां नाशय त्वं स्मरारे निर्विघ्नाना मऽतीवप्रहतकृतधिया माऽऽग्रहैकप्रियाणाम् ।
शम्भो शम्भावको मे भव भवहर भो श्चन्द्रमौले पुरारे, भस्मालङ्कारभव्य त्रिदृ गिह वस मे मानसे सर्वदा त्वम् ।७४।

ऽस्मिन् मेमममानसेहृदये सर्वदानिरन्तरमेव त्वम् वासम् कुरु ॥ ७४ ॥ अथध्यानान्तरमाह धन्योसीति हेईशहेमहादेव त्वम् धन्योऽसिलोकोत्तरपुण्यप्रधानोऽसि धन्यःपुण्यवतित्रिष्वितिमेदिनी अथच अतएव निखिलानांसर्वेषाम् दिविषदान्देवानाम् अग्रगण्योऽसिमुख्योऽसि अतएव वेदमान्योऽसि सकलश्रुतिप्रशंसनीयोऽसि अथच वदान्योऽसि अतिबहुप्रदोऽसि अथच ध्येयोऽसि ध्यातुमर्होऽसि अथच निरञ्जनत्वात् अप्रमेयोऽप्यसिप्रमातुमयोग्योऽप्यसि अथच अगुणोऽपिसत्वादिगुणहीनोऽपि उरुगुणश्शरणागतरक्षणत्वादिबहुगुणाश्रितोऽसि अतएव कीर्त्तनीयोऽपिप्रशंसनीयोऽपि अकीर्त्यः

अतीन्द्रियत्वाद्वागविषयोऽसि अतएव हेगिरिशकैलासवासैकप्रिय हेपशुपते कीटादिब्रह्मदेवपर्य्यन्तप्राणिवर्गाधीश्वर-अजस्रमनिशम् त्वाम् हृदिहृदयावकाशे अहम् श्रीमद्भवद्भक्तिपरायणोलक्ष्मीनारायणः दधे धारयामिध्यायामीत्यर्थः कीदृ-शन्त्वाम् चन्द्राग्न्युष्णांशुनेत्रम् शशिवह्निरविनयनम् पु० की० कलितकलिकलङ्कपरिहृतदोषपरम्पराकम् पु. की. अतएव कालकालंमृत्युञ्जयम् पु. की. करालन्दुष्टजनभयङ्करम् पु. की. सत्पालंसज्जनरक्षकम् पु. की. नागमालंशेषहारम् ॥ ७५ ॥



धन्योऽसीशाऽग्रगण्यो निखिलदिविषदां वेदमान्यो वदान्यो ध्येयोऽथाप्यप्रमेयोऽप्यगुण उरुगुणः कीर्त्तनीयोऽप्यकीर्त्त्यः। चन्द्राग्न्युष्णांशुनेत्रङ्कलितकलिकलङ्कालकालङ्करालं सत्पालं नागमालङ्गिरिशपशुपते त्वान्दधे हृद्यऽजस्रम् ॥७५॥

अथाद्भुतन्ध्यानान्तरमाह देवेति अहम् श्रीभवंसर्वसमृद्धिकारणम् श्रीमहेश्वरम्भावयामिध्यायामि कीदृशंश्रीभवम् देवै-रिन्द्रादिभिः अदेवैस्तद्भिन्नैरसुरनरादिभिश्च अर्चितौपूजितौ अङ्घ्रीचरणौयस्यतम् पु. की. अतएव त्रिभुवनेनलोकत्रयेण विनुतंविशेषेणस्तुतम् पु. की. सर्वासुसकलासु शक्तिषु भक्तजनाऽसाध्यकार्यसाधनसमर्थसामर्थ्येषु प्रकर्षेणसक्तन्दत्त-चित्तम् यद्वा सर्वशक्तयः प्रसक्ताआसाक्तिमत्यः यत्रतम् पु. की. यतः भक्तार्त्तिध्वंसरक्तम् निजसेवकजनसमस्तपीडानिवा-

रणोत्सुकम् पु. की. विषयरससुखे पामरजनैकसेवनीये शब्दादिविषयानुभवानन्दे सन्ततंसर्वदैव सम्यक् विरक्तमुदासीनम् पु. की. चन्द्रार्द्धोल्लासिभालंशिशुशशिशोभिमस्तकम् पु. की. विकलः शान्तः कलकलःकोलाहलः येनयस्ययत्रवासतम् सर्वदैवैकान्तवासातिप्रियत्वात् कोलाहलपराङ्मुखमित्यर्थः पु. की. निपीतगरलत्वात् कालोनीलः कण्ठोगलोयस्यसतम् पु. की. विकुण्ठंसर्वस्मिन्विषयेऽतिजागरूकम् पु. की. भस्मोद्भासिस्वरूपम् विभूतिभूषितस्वविग्रहम् पु. की. निरु-

देवादेवार्चिताङ्घ्रि न्त्रिभुवनविनुतं सर्वशक्तिप्रसक्त म्भक्तार्त्तिध्वंसरक्तं विषयरशसुखे सन्ततं संविरक्तम् ।
चन्द्रार्द्धोल्लासिभालं विकलकलकल ङ्कालकण्ठं विकुण्ठ म्भस्मोद्भासिस्वरूपं निरुपमविभवं श्रीभव म्भावयामि।७६

पमस्स्वसदृशान्तरविरहितः विभवोमहैश्वर्य्यंयस्यसतम् ॥ ७६ ॥ अथ बहुलप्रशस्तिप्रशस्तन्ध्यानान्तरमाह लक्ष्मीति हेलक्ष्मीनारायणस्य श्रीपद्मासहकृतस्य विष्णोः लक्ष्मीनारायणस्यकवेर्वा यदन्तःकरणम् तस्य निवसते निवासस्थान तथा हे सर्वजीवानाम् अन्तरात्मन् सर्वस्वान्तैकनिवासिन् हेब्रह्माण्डाधीश सकलजगदधिपते हेशम्भोनिजजनकल्याणकारण हेनिरुपधिकरुणावासोनिर्व्याजकरुणानिधानम् हृत् हृदयंयस्य तत्सम्बुद्धौ हेनीलकण्ठ हेभक्तापद्ध्वंसदक्षहेस्वसेवकाविपत्तिविलयाऽतिकुशल हेत्रिभुवनजननीदक्षकन्यैकपक्ष हेत्रिलोकीमातृगौर्य्यैकसहाय अथच हेपुरारे त्रिपुरासुरशत्रो अहम्

भवदेकपरायणोलक्ष्मीनारायणोनाम त्वाम् भगवन्तम्भवन्तमेव इहाऽस्मिन्नित्यङ्गुल्यानिर्देशः हृदिध्यानार्हेहृदयेध्यानगम्यन्ध्यानैकविषयम् करोमि कीदृशन्त्वाम् त्रिदृशन्त्रिनेत्रम् ॥७७॥ अथातीवहृदयङ्गमन्ध्यानान्तरमाह देवेति हेदेव यद्वा देवानामिन्द्रादीनाम् श्रीनाथस्यविष्णोश्च भक्तिर्भावः प्रियतमाऽतिप्रिया हृदयाऽऽह्लादिनीयस्य तत्सम्बुद्धिः तथा हेगिरिजायाः श्रीगौर्याः प्राणनाथजीवितजीवातो तथा हेस्मरारे सर्वोपद्रवनिदानमनोजदाहविधायिन् तथा हेत्रिदिवनिवसतान्देवलोक-



लक्ष्मीनारायणान्तःकरणनिवसते सर्वजीवान्तरात्मम् ब्रह्माण्डाधीश शम्भो निरुपधिकरुणावासहृन्नीलकण्ठ।
भक्तापद्ध्वंसदक्ष त्रिभुवनजननीदक्षकन्यैकपक्ष त्वा मे वाऽह म्पुरारे त्रिदृश मिह हृदि ध्यानगम्य ङ्करोमि।७७।
देव श्रीनाथभक्तिप्रियतम गिरिजाप्राणनाथ स्मरारे त्रायस्व त्राणकारिं स्त्रिदिवनिवसतां मां मुदा दीनबन्धो।
राजत्कारुण्यसिन्धो शशिशकलसद्भालशालि न्कपालिन् गङ्गाकल्लोलमालि न्दध इह हृदये त्वा मऽहं विश्वपालिन्।७८

वासिनाम् शक्रादीनाम् त्राणकारिन् रक्षाविधायिन् तथा यतः हे दीनानांरक्षकान्तरशून्यानाम् बन्धोबान्धव रक्षैकदत्ताचित्तेत्यर्थः माम् मुदावात्सल्यानुरागेण त्वम् त्रायस्वपाहि अथचहेराजत्कारुण्यसिन्धो चञ्चत्कृपापारावार तथा हेशशिशकलसद्भालशालिन् हेबालचन्द्रचञ्चल्ललाटशोभिन् तथा हेकपालिन् करधृतब्रह्मदेवशिरोऽस्थिन् तथा हेगङ्गाकल्लोलमालिन्

शिरस्स्थश्रीभागीरथीमहातरङ्गपरम्पराक महत्सूल्लोलकल्लोलावित्यमरः तथा हेविश्वपालिन् समस्तजगद्रक्षक श्रीमहादेव अहम् त्वाम्भवन्तम् इहास्मिन् हृदये दधेधारयामि चिन्तयामीतियावत् ॥७८॥ अथध्यानान्तरमाह त्वामिति हेविश्वनाथ त्वाम्भवन्तम् मुक्त्वा परित्यज्य विस्मृत्यानादृत्येतियावत् एवम्भवन्तामिव अन्यन्त्रिदशवरमिन्द्रादिकम् अहम् नस्मरामि न भजामि त्रिदशवरंसर्वसुपर्वर्वय्यमिति त्वामित्यस्यविशेषणंवा अथच हेगिरिशपशुपतेइदम् मेमम मनः त्वत्तोभगवतो-

त्वां मुक्त्वा विश्वनाथ त्रिदशवर मऽहं नैव मऽन्यं स्मरामि त्वत्तः कल्याण मग्र्यङ्गिरिश पशुपते वाञ्छती दंमनोमे।
भक्ति स्त्वय्येव मे ऽस्ति त्रिदृगऽतिविमला धूर्ज्जटेनीलकण्ठ श्रीकामारे पुरारे वस मम हृदये सन्ततन्दीनबन्धो ७९।

भवत्तः नाऽन्यस्मात्कस्माच्चिदपिदेवात् अग्र्यंमुख्यम् मोक्षलक्षणम् कल्याणम् वाञ्छतिसमभिलषति अथच हेत्रिदृक्त्रिन-यन हेधूर्ज्जटे जटामण्डलमण्डितशिरस्क तथा हेनीलकण्ठ श्यामलग्रीव मेमम अतिविमलाऽत्यन्तस्वच्छानिरुपाधिकेति-यावत् भक्तिस्सेवाऽनुरागः त्वय्येवभवत्येव नाऽन्यत्रकुत्रचिदपिविषये अस्तिविद्यते तस्मात् हेश्रीकामारे हेश्रीदुर्मदमदन-रिपो तथाहेपुरारेत्रिपुरासुरान्तक तथा हेदीनबन्धो अनन्यगतिकजनबान्धव मम हृदये सन्ततमविरतम् त्वम् वस ध्यान-गम्योभव ॥ ७९ ॥ अथ ध्यानान्तरमाह हेश्रीमन्निति हेश्रीन् त्रिवर्गसम्पत्त्यादिसमाश्रित हेविश्वनाथ परकृपासन्निवासैक-

सद्म निर्व्याजकारुण्यसम्यक्स्थितिप्रधानमन्दिरस्वरूपःत्वमसि नान्यः कोऽपिदेवइत्यर्थः ततः हेदेवदेव सर्वदेवाधिपते
स्थिरविभवमाविनाशिमाहात्म्यम् अथच शरण्यंशरणागतरक्षणविचक्षणम् त्वाम् भगवन्तम्भवन्तम् त्यक्त्वाविहायअन्य-
मितरम् अनेतादृशम् कम् देवादिकम् श्रये अहम् सेवे नकमपीतिभावः अतएव सर्वेड्यम् सुरासुरनरोरगादिसकलप्राणि-
वर्ग्गस्तुत्यम् सर्वशक्तिसमस्तसामर्थ्याश्रितम् पृथुकसितकरभ्राजिभालंनवेन्दुशोभिगोधिम् जटालञ्जटावन्तम् दिग्वस्त्रमाशा-

हेश्रीमन् विश्वनाथत्वमऽसि परकृपासन्निवासैकसद्म त्यक्त्वा त्वान्देवदेव स्थिराविभव मऽहङ्कं श्रयेऽन्यं शरण्यम् ।
सर्वेड्यं सर्वशक्तिम्पृथुकसितकरभ्राजिभालञ्जटालन्दिग्वस्त्रं रङ्कुहस्तम्भसितसिततनुं सन्दधेऽन्तर्भवन्तम् ।८०।

म्बरम् रङ्कुहस्तङ्करधृतमृगशावम् भसितसिततनुम्भस्मलेपातिशुभ्रशरीरम् भवन्तम् त्वाम् अन्तःकरणे ध्यानार्हेहृदये
अहम् सन्दधे सम्यक् धारयामि ॥ ८० ॥ अथध्यानान्तरमाह यस्येति हेहरस्वभक्तदुःखहारक श्रीमहादेव यस्यभवतः
भ्रूसञ्ज्ञया भ्रूचालनरूपेणसङ्केतेन अजः श्रीब्रह्मदेवः इदन्दृश्यम् जगद्विश्वम् सृजातिनिर्मातिं अथच वैकुण्ठनाथः श्रीविष्णुः
पातिसर्वोपद्रवेभ्योरक्षति असौवेदादिप्रसिद्धः इतिसर्वत्रयोजनीयम् रुद्रोभवन्मूर्त्तिविशेषः अत्तिभक्षति संहरतीत्यर्थः
अथच सूर्य्यः श्रीमार्त्तण्डः तपातिप्रकाशयाति अन्तर्भावितण्यर्थमिदङ्क्रियापदम् अथो अनन्तरम् विधुश्चन्द्रमाः सम्यगे

वाऽविषमतयैव भासयतिदीपयति शोभमानङ्करोतीत्यर्थः तम् भवन्तम् त्वाम् अहम् भजेसेवे ध्यायामीतियावत् कीदृश-म्भवन्तम् श्रीमन्तम् लोकविलक्षणैश्वर्यम् दिगम्बरत्वादिभूतमपिशोभमानम् पु. की. सुरनिवहे ब्रह्मविष्णुशक्रादिदेव-समुदाये सन्तंश्रेष्ठम् पु. की. अतएव उच्चैरत्यन्तम् लसन्तम् देदीप्यमानम् पु. की. चन्द्रेणवामनेत्ररूपेण अर्केणदक्षनेत्र-रूपेणसूर्येण अग्निना भ्रूमध्यस्थतृतीयनेत्ररूपेणवह्निना इन्दुना भालस्थितेन शिशुना शशिना गङ्गया शिरस्स्थयाभागीर-

यस्यभ्रूसञ्ज्ञयाऽजस्सृजतिजगदिदम्पातिवैकुण्ठनाथोरुद्रोऽसावऽत्तिसूर्यस्तपतिविधुरऽथोभासयत्येवसम्यक् ।
श्रीमन्तन्तम्भवन्तंहरसुरनिवहेसन्तमुच्चैर्लसन्तश्चन्द्रार्काग्नीन्दुगङ्गाडमरुमृगवराभीतिरम्यम्भजेऽहम् ॥८१॥

थ्या डमरुणा करस्थेनवाद्यविशेषेण मृगेणनिमित्तविशेषातिकुपितमहर्षिविहितया हरिणरूपयाकरगृहीतया कृत्यया वरे-णवरमुद्रया अभीत्याऽभयमुद्रयाच रम्यमतिशोभमानविग्रहम् ॥८१॥ अथध्यानान्तरमाह योगीन्द्राइति हेशिव हेशिवकर श्रीशङ्कर भक्तिभावात् तन्त्वाम् अहम् भजेसेवे ध्यायामीतियावत् तङ्कम् योगीन्द्राः परिपक्वयोगाभ्यासाः योगविद्याप्रफुल्ले हृदयसरसिजे स्वहृदयकमले यम् त्वाम् यथेच्छम् ध्यात्वा वश्येऽधीनत्वे वश्योवश्यवर्त्तीवा कालोमृत्युर्भगवान् येषाम् तेतथोक्ताः भवन्तिजायन्ते कीदृशायोगीन्द्राः स्वाधीनंस्वायत्तम् चित्तंमनोयेषाम् तेतथाभूताः पु. की. यतः विज्ञनाविषयगाः

निर्ज्जनप्रदेशवासिनः कीदृशान्त्वाम् अत्यन्तम् कृपालुम् अतीवदयैकपरायणम् पु. की. गरलेन शितिगलंनीलकण्ठम् अथ-
च चन्द्रभालं ललाटशोभिबालकलाधरम् पु. की. दुष्टानाअगद्द्वेषिणाम् करालोभीषणः सतम् करालोदन्तुरेतुङ्गेभीषणे-
चाभिधेयवत् ससर्ज्जरसेतैलेना क्लीवङ्कृष्णकुठेरकेइतिमेदिनी पु. की. भक्तान्सेवकान् पालयतिसर्वतोरक्षति सतथाभूतः

॥ ४३ ॥

योगीन्द्रायंयथेच्छंहृदयसरसिजेयोगविद्यामफुल्लेध्यात्वास्वाधीनचित्ताविजनविषयगावश्यकाला भवन्ति ।
अत्यन्तन्तङ्कृपालुङ्गरलशितिगलश्चन्द्रभालङ्करालन्दुष्टानाम्भक्तपालंशिवशिवदमऽहम्भक्तिभावाद्भजेत्वाम् ॥८२॥

घण्टाङ्कम्बुन्त्रिशूलण्डमरुमऽजगवंशृङ्गमेणम्भुजङ्गंहस्ताब्जैर्द्धारयन्तंसुरसारितऽमपित्र्यम्बकंनीलकण्ठम् ।
चञ्चत्पर्य्यङ्कसंस्थंसगिरिवरसुतंशोभितंषण्मुखाद्यैश्शक्राद्यैर्वन्दिताङ्घ्रिङ्गिरिशहृदिदधेसर्वदंसर्वदात्वाम् ॥८३॥

तम् पालरक्षणेकर्म्मण्यण् पु. की. शिवदङ्कैवल्यमुक्तिलक्षणकल्याणैकप्रदम् ॥ ८२ ॥ अथातिहृदयङ्गमंध्यानान्तरमाह घण्डा-
मिति हेगिरिशकैलासनिवासप्रियश्रीमहेश्वर सर्वदा त्वाम्भवन्तम् अहम् हृदि दधेधारयामि कीदृशान्त्वाम् घण्टाम् क-
म्बुंशङ्खम् त्रिशूलम् डमरुम् अजगवम्पिनाकंनामधनुः शृङ्गम् वादनार्थम् खर्ज्जूनिवारणार्थंवा हरिणविषाणम् एणंमृगम्

भुजङ्गंसर्प्पम् हस्ताब्जैः अष्टभिःकरकमलैः धारयन्तम् शास्त्ररीत्यादधतम् पु. की. सुरसरितमपिश्रीगङ्गामपि धारयन्तम् शिरसीत्यर्थात् पु. की. त्र्यम्बकन्त्रिनयनम पु. की. नीलकण्ठम् पु. की. चञ्चत्पर्य्यङ्कसंस्थम् दिव्यमणिखचितत्वात्सौवर्ण-त्वाच्च देदीप्यमानसिंहासनस्थम् संस्थमित्यत्रसुस्थमित्यपिपाठः पु. की. सगिरिवरसुतंश्रीपार्वतीशोभिवामाङ्कभागम् पु. की. षण्मुखाद्यैः श्रीमत्कार्त्तिकेयप्रमुखैः वन्दितौप्रणतौ अङ्घ्रीचरणकमले यस्यसतम् अत्राद्यपदेनवरुणादयोगृह्यन्ते

अर्च्योयोऽस्यप्यऽनर्च्योगुरुरगुरुरऽपित्रीक्षणोऽपीक्षणीयोऽकीर्त्योऽप्याऽकीर्त्तनीयास्त्रिभुवनविषयेऽनीश्वरोऽपीश्वरोऽसि। तन्त्वाम्बालेन्दुमौलेभुजगपतिलसद्दिव्यमालंस्मरारेहृद्यस्मिन्भाक्तिभावाद्भवभयविकलस्सन्ततन्धारया-मि ॥ ८४ ॥

पु. की. यतः सर्वंदंसेवकजनाभिलषितमात्रप्रदम् ॥८३॥ अथ समाहात्म्यभरन्ध्यानान्तरमाहअर्च्यइति हेबालेन्दुमौलेशिशु-शशधरमुकुट हेस्मरारेमदनरिपो भवभयविकलः पुनस्संसारसंसर्गसम्भावनातिक्षुभितमनाः अहम् लक्ष्मीनारायणः अस्मिन् अयमङ्गुल्यानिर्देशः हृदिध्यानयोग्येहृदयावकाशे सन्ततम् अविरतम् तम् त्वाम्भगवन्तम्भवन्तम् धारयामिस्थापयामि कीदृशन्त्वाम् भुजगपतिर्न्नागराजोवासुकिरेव लसन्तीवक्षस्स्थलेभ्राजमाना दिव्याऽलौकिकी मालास्रक् यस्यसतम् तङ्-

न्त्वाम् यस्त्वम् अर्च्यो॑ऽपीत्यस्यसर्वत्रान्वयः अनर्च्यो॑ऽसीतिविरोधः मायया धृतविग्रहत्वात्पूजनीयोऽपि मायाऽतीतस्व-
रूपत्वात् अनर्च्यो॑ऽपूजनीयोसीतिविरोधाभावः अथच गुरुरपि अगुरुरसि इतिविरोधः नास्तिगुरुर्य्यस्यसतथोक्तोऽसी-
त्यविरोधः अथच त्रीक्षणोऽपित्रिनेत्रोऽपि असुन्दरोऽपि ईक्षणीयोदर्शनीयोऽसीतिविरोधः अलौकिकलावण्यशालित्वात्
दर्शनस्पृहाजनकोऽसीत्यविरोधः अथच अकीर्त्यो॑प्यकथनीयोऽपि आसमन्तात्कीर्त्तनीयोऽसीतिविरोधः अतीन्द्रियत्वा-

नानोग्रोपद्रवेभ्यस्सरसहृदयभोदेवकारुण्यसिन्धोशम्भोभक्तान्स्वकीयानऽवसिशरणगान्दीनबन्धोपुरारे ।
तत्तेवालेविशालेदुरितरतधियांहृद्यऽरालोऽहिमालश्चश्चन्द्रार्द्धभालन्धृतगरलगलङ्कालकालम्भजेत्वाम् ॥८५॥

दकीर्त्यो॑पि सगुणस्वरूपत्वात् आकीर्त्तनीयोऽसीत्याविरोधः अथच त्रिभुवनविषयेत्रिलोक्याम् अनीश्वरोपीश्वराभावविशि-
ष्टोऽपि ईश्वरोऽसीतिविरोधः नास्तीश्वरस्स्वामीनियन्तायस्यसतथोक्तोऽसीत्यविरोधः ॥ ८४ ॥ अथ ध्यानान्तरमाह ना-
नोग्रोपद्रवेभ्यइति हेसरसहृदय वात्सल्यमसृणमनस्क भोदेव स्वमहात्म्यप्रकाशशालिन् हेकारुण्यसिन्धो कृपासमुद्र
हेशम्भोश्रीमहेश्वर हेदीनबन्धोहेपुरारे यतः नानाविधेभ्यः उग्रेभ्योऽतिदुस्सहेभ्यः उपद्रवेभ्यः आपद्भ्यः शरणगान्स्व-
कीयान्भक्तान् त्वम् अवसिरक्षसि तत् ततः तेतव बालः दुरितरतधियामतिपापानुरागिणाम् जनानाम् मध्ये विशालो-

महान् यतः हृदामानसेन हृदिमानसेवा करालोभीषणोऽतिक्रूरइतियावत् अहम् त्वाम्भवन्तम् भजेसेवे ध्यायामीत्यर्थः कीदृशन्त्वाम् अहिरेवसर्प्प एव मालास्रक् यस्यसतम् पु. की. चञ्चच्चन्द्रार्द्धभालन्देदीप्यमानबालेन्दुललाटम् पु. की. धृतगरलोगलोयस्य सतम् पु. की. कालकालंमृत्युञ्जयम् ॥ ८५ ॥ अथमहामहिमसंस्कृतन्ध्यानान्तरमाह दीनानामिति कामङ्कन्दर्प्पम् मारयतीतितच्छीलः काममारीश्रीमान्महादेवः सन्ततम् मम हृदि ध्यानार्हे हृदये वसताद्वासङ्करोतु कीदृशः

दीनानान्दैन्यहारीस्वनिरतमनसांसौख्यसम्पत्तिकारीकैलासक्ष्माविहारीदरडमरुमृगव्यालभस्मेन्दुधारी ।
संसारापद्विदारीसुकृतरतधियांसर्वदैकान्तचारीभक्तोद्धारैकभारीममहृदिवसतात्सन्ततङ्काममारी ॥८६॥

काममारी दीनानाम् दैन्यहारी दीनतानिवारणपूर्वकम्प्रभुत्वसम्पादकः पु. की. स्वनिरतमनसाम् स्वानुरागिचेतसाम् न्दृणाम् सौख्यसम्पत्तिं सुखसमृद्धिम् सौख्यसम्पत्तीकल्याणैश्वर्य्येवा करोति तच्छीलः सतथोक्तः पु. की. कैलासक्ष्माविहारी कैलासभूमिविहरणशीलः पु. की. दरडमरुमृगव्यालभस्मेन्दुधारी शङ्खादिधारकः पु. की. सुकृतरतधियान्धर्म्मैकपरायणानाम् जनानाम् संसारापदस्संसारापत्तीः संसारजन्ममरणादिदुःखस्वरूपम् आपदस्तदन्तर्गतनानाविधाः अतिदुस्सहाः विपत्तीश्चवा विदारयति समूलमुच्छिनत्तीतितच्छीलः सतथोक्तः पु. की. सर्वदानित्यम् एकान्तचारी योगीन्द्र

त्वान्निर्ज्जनविषयविहरणशीलः पु. की. भक्तानाम् उद्धारमेवैकम् बिभर्त्तिधारयतितच्छीलः यद्वा भक्तानामुद्धारएव एको- मुख्यः भारः सोऽस्त्यस्यास्मिन्वा सतथाभूतः ॥८६॥ अथध्यानान्तरमाह आनन्देति हेआनन्दारण्यवासिन् श्रीवाराणसीवा- स्तव्य हेत्रिजगदधिपते सकलब्रह्माण्डनायक हेदेवदीप्तिशालिन् हेकारुण्यसिन्धोदयापयोधे हेशम्भोकल्याणैकनिदान भक्त्या शक्त्या स्वसामर्थ्यानुसारेण अविरक्त्याऽत्यासक्त्या विरक्त्यासंसारोपरत्पावा अधिकयाबहुलया मुदाप्रीत्याच



आनन्दारण्यवासिं त्रिजगदधिपतेदेवकारुण्यसिन्धोत्वामेवाहं शरण्यंनिजभरणचणं सर्वदेवाग्रगण्यम् ।

भक्त्याशक्त्याविरक्त्याऽनिशमधिकमुदाध्यातुमिच्छामि शम्भोदिग्वासश्चन्द्रमौलेवसममहृदये सर्वदापार्वतीश ८७

अनिशमविच्छिन्नम् त्वामेवभगवन्तम्भवन्तमेव नान्यङ्कमपिदेवादिकम् ध्यातुमिच्छामि कीदृशन्त्वाम् शरण्यंशरणागतसाधुम् दीनदैन्यनिवारणसमर्थमित्यर्थः पु. की. निजभरणचणंस्वजनपरिपालनप्रसिद्धम् पु. की. सर्वदेवाग्रगण्यंसकलामरप्रधानम् अथच हेदिग्वासोदिगम्बरनिर्विकारस्वरूपेतियावत् हेचन्द्रमौले नवेन्दुगोधे हेपार्वतीशपर्वतराजसुतेश सर्वदा ममहृदये त्वम् वस मद्ध्यानगम्योभव ॥८७॥ अथवाग्विलासमनोहरन्ध्यानान्तरमाह विश्वमिति होविश्वम्भरविषमतां हेयोपादेयवि- कारविशेषसाहित्यम् दूरमुत्सृज्यात्यन्तन्त्यक्त्वा यस्मात् विश्वंसर्वञ्जगत् नित्यंसर्वदा त्वम् भरसिपुष्णासि तत्तस्मात् स-

तीनिर्दोषा सर्वोच्चासकलाधिकावा कीर्त्तिर्यस्यसतथोक्तः तत्सम्बुद्धौ हेसत्सर्वोच्चकीर्त्ते हेनाथहेस्वामिन् मम विश्वान्तर्गतस्य भरणेपोषणे कोविशेषः कानवीनता काऽपूर्वता कस्तवप्रयासइतियावत् तस्मात् हेभव हेमृड हेऊर्द्ध्वोरुकेश हेमहोन्नतवहुलतरशिरोरुह संसारदुःखात् जन्ममरणादिजनितात् क्लेशात् स्वमात्मीयम् माम् त्वम् अवरक्ष अथच हेश्रीमन्नलौकिकशक्तिसम्पत्ते हे त्र्यक्षत्रिनेत्र हे इन्दुमौले भसितंसितंयेन तत्सबुद्धौ हेभसितासित हेभस्मगौर हेविभोसर्वव्यापक

विश्वंविश्वम्भर त्वम्भरसिविषमतान्दूरमुत्सृज्यनित्यन्तत्स त्सर्वोच्चकीर्त्ते वदममभरणेकोविशेषोऽ स्तिनाथ।

तस्मात्संसारदुःखादव भवमृडमांस्वीयमूद्र्ध्वोरुकेश श्रीमंस्त्र्यक्षेन्दुमौले भसितसितविभो मानसेतिष्ठमेत्वम् ८८

मम मानसेहृदये त्वम् तिष्ठवस ध्यानविषयोभवेत्यर्थः मयिइदमेवविशेषद्वयंविधेहीतियावत् ॥ ८८ ॥ अथ सविलक्षणविचारन्ध्यानान्तरमाह गौरीशेति हेगौरीश प्रवरविभवदमचिन्तनीयवैभवप्रदातारम् अतएव वैभवाकाङ्क्षिसेव्यम् महैश्वर्याभिलाषिजनसेवनीयम् त्वाम्भगवन्तम्भवन्तम् उपेक्ष्य विस्मृत्य सतस्सर्वोत्तमस्य त्वत्तत्त्वस्यभवत्प्रभावस्य अनभिज्ञाः अज्ञातारोजनाः इतरम्भवदन्यम् सुरवरन्देवोत्तमम् प्राच्र्यसम्पूज्य किम् प्राप्नुवान्तिलभन्ते नकिमपीतिकाकुः तत्तस्मात्कारणात् भोगिरिशकैलासवासैकरुचे हेभवसदैकरस हेविभोसर्वव्यापक हेव्यालमाल हेत्रिनेत्र हेबालेन्दुमौले हेमृगडम-

रुवराऽभीतिपाणे सर्वेश्वरंसकलब्रह्माण्डप्रभुम् त्वाम्भवन्तम् स्वान्तेनिजहृदये अहम् दधेधारयामि ध्यायामीत्यर्थः चित्त-
न्तुचेतोहृदयंस्वान्तंहृन्मानसंमनइत्यमरः ॥ ८९ ॥ अथध्यानान्तरमाह चञ्चदिति शङ्कल्याणंमोक्षलक्षणम् भवत्यस्मादिति-
शम्भुः तन्तथोक्तम् कर्म्म अहम् ईडेस्तौमि ध्यानविषयङ्करोमीतियावत् कीदृशंशम्भुम् चञ्चन्महोज्ज्वलम् कुम्भीन्द्रस्य



गौरीशत्वामुपेक्ष्यप्रवरविभवदंवैभवाकाङ्क्षिसेऽर्थ्यंसत्त्वतत्त्वाऽनभिज्ञास्सुरवरामितरम्प्रार्च्यकिम्प्राप्नुवन्ति ।
तत्त्वांसर्वेश्वरम्भोगिरिशभवविभोव्यालमालत्रिनेत्रस्वान्तेबालेन्दुमौलेमृगडमरुवराभीतिपाणेदधेऽहम् ॥८९॥

चञ्चत्कुम्भीन्द्रकृष्णाजिनवरवसनं सर्वगात्राहिभूष ङ्गङ्गाराजज्जटाकं सितकरतिलक न्त्रीक्षणं नीलकण्ठम् ।
माहोक्षश्चारु पृष्ठंश्रित मशितितनुं वक्रतुण्डादिजुष्ट ङ्गन्धर्वैः किन्नरैश्च त्रिदशमुनिवरै स्सेवितं शम्भुमीडे ॥९०॥

गजराजतनोरसुरविशेषस्य यत् कृष्णम् अजिनञ्चर्म्मतदेव वरमुत्तमम् वसनंवस्त्रंयस्यसतम् वरेति अजिनेनवायोजनीयम्
पु. की. सर्वस्मिन्गात्रेशरीरे अहयस्सर्पाएव भूषाभूषणानियस्यसतम् पु. की. गङ्गया राजन्त्योदीप्यमानाः जटायस्य-
सतम् बहुव्रीहौकप् पु. की. सितकरश्शुभ्रांशुः तिलकोयस्यसतथोक्तस्तम् पु. की. नीलकण्ठम् पु. की. माहोक्षंमहावृष-

भसम्वन्धि चारु विशालत्वादिनाऽतिसुभगम् पृष्ठम् श्रितमाधिष्ठितम् पु. की. असितिरकृष्णा अतिशुभ्रेतियावत् तनुश्शरीरंयस्यसतम् पु. की. वक्रतुण्डादिभिः श्रीगणपतिप्रभृतिभिः आदिना नन्दिभृङ्ग्यादयोग्राह्याः जुष्टस्सर्वतस्सेवितम् पु. की. गन्धर्वैः किन्नरैः त्रिदशादेवाः मुनिवराः महर्षयश्च तैस्सेवितम् समर्चितम् ॥ ९० ॥ ध्यानान्तरमाह श्रीकाशीति हेश्रीकाशीनाथ हेशम्भो हेत्रिपुरहर हेविभोसर्वव्यापक हेसत्प्रभो हेसर्वाधिकसमर्थ हेसतांश्रेष्ठानाम्ब्रह्मादीनाम्प्रभोवा

श्रीकाशीनाथशम्भो त्रिपुरहर विभो सत्प्रभो कामजिद्भो मां स्वार्चासक्तचित्त म्पृथुक मऽशरणं नोत्यजत्वं शरण्य ।
सर्वेशं शर्व सर्वत्रिदशवरविपन्नाशसोत्साह मीशन्त्वा मेवाहन्दधे ऽन्त स्त्रिनयन मऽलयश्चन्द्रमौले दयालो ॥९१॥

भोः कामजिन्मदनारे हेशरण्य शरणागतजनसंरक्षणबद्धपरिकर स्वार्चासक्तचित्तंनिजसमर्चनातिरागिमनस्कम् पृथुकं सर्वास्मिन्विषयेबालम् भवदेककृपापात्रमित्यर्थः अशरणम्भवदन्यरक्षकविहीनम् माम् लक्ष्मीनारायणम् त्वम् नोत्यज नोजहीहि उपेक्षाविषयम् माविधेहीत्यर्थः अथच हेशर्व हेचन्द्रमौले हेदयालो अहम् त्वामेव अन्तरन्तःकरणे दधेधारयामि ध्यायामीत्यर्थः कीदृशन्त्वाम् सर्वेशमखिलब्रह्माण्डनायकम् पु. की. सर्वेषान्त्रिदशवराणामिन्द्रादीनाम् विपदाम् तत्तत्समयसमागतानांनानाविधानांविपत्तीनाम् नाशेनिवारणे सोत्साहंसमुत्सुकम् पु. की. यतः ईशमतिसमर्थम् पु. की. त्रिनय-

नञ्जगत्त्रयरक्षणार्थम् धृतनेत्रत्रयम् पु. की. नास्तिलयः क्षयोयस्य सतथोक्तस्तम् सर्वदैकरसङ्कालत्रयाबाध्यमित्यर्थः ।९१।
अथध्यानान्तरमाह शान्तात्मन्निति हेशान्तात्मन् सच्चिदानन्दपूर्णब्रह्मस्वरूपत्वात् विक्षेपशून्यमनस्क अतएव कान्ता
सकलजनहृदयङ्गमाकान्तिश्शान्तादीप्तिर्यस्य तत्सम्बोधनम् हेकान्तकान्ते हेदेव स्वयम्प्रकाश मयिनिजभक्ते सत्वरम्
द्रुतमेव परमामुत्कृष्टाम् कैवल्यसाधनीभूतामित्यर्थः शान्तिशमम् कुरुविधेहि अथच धूर्भारभूता जटिर्जटा यस्य तत्सम्बु·



शान्तात्मन्कान्तकान्ते कुरु मयिपरमां सत्वरन्देव शान्तिङ्क्लेशानुत्था निदानींशमय शमनजिद्धूर्ज्जटे शूलपाणे।
ब्रह्माण्डस्वामिनन्त्वा झटिलसदलिकं नीलकण्ठन्त्रिनेत्रन्दिग्वस्त्रन्तीक्ष्णशस्त्रङ्कुशलदचरितं नागभूषंस्मारामि।९२

द्धौ हेधूर्जटे हेभारवत्तरजटाक जटसटसङ्घाते सर्वधातुभ्यइतीन् जटिर्ज्जटेतिद्विरूपकोशः हेशूलपाणे जगद्रक्षार्थम् करधृ·
तत्रिशूल हेशमनजित् हेकालकाल इदानीमधुना उत्थान्दुर्ज्जनजनितान् वक्तुमशक्यान् क्लेशान्नानाविधानिदुःखानि
क्लेशोदुःखेऽपिकोपेऽपिव्यवसायेऽपिदृश्यते इतिमेदिनी ममेतिशेषः त्वम् शमयनिवारय एतदर्थमेव त्वाम् भवन्तम् स्मरा·
मिध्यायामि कीदृशन्त्वाम् ब्रह्माण्डस्वामिनन्त्रिभुवनरक्षणविचक्षणम् पु. की. जटिलअटावदपि सत्समीचीनम् यद्वा जटि·
जटावत् अतएव लसच्छोभमानम् अलिकंललाटंयस्यसतम् पु० की० नीलकण्ठम् पु० की० त्रिनेत्रम् पु० की० दिग्वस्त्र·

न्दिगम्बरम् पु० की० तीक्ष्णानिनिशितानि शस्त्राणि परश्वधादीन्यायुधानियस्यसतम् पु० की० कुशलदानिकल्याणकराणि चरितानिकथाप्रसङ्गायस्य सतम् पु० की० नागभूषंसर्प्पभूषणम् ॥ ९२ ॥ अथध्यानान्तरमाह गङ्गेति शङ्करःपरमकल्याणकरः श्रीमहेश्वरः मेमम हृदिहृदयावकाशे स्ताद्वर्त्ततताम् कीदृशश्शङ्करः गङ्गाकल्लोलमालाभिः श्रीभागीरथीमहातरङ्गपरम्पराभिः लसन्नतिप्रकाशमानः अतिविमलोऽतिस्वच्छः स्फारोविशालः केशानाङ्कचानाम् उरुभारोमहाडम्बरोयस्य

गङ्गाकल्लोलमालालसदातिविमलस्फारकेशोरुभारःसर्वाङ्गभ्राजिनानाविधभुजगवरव्रातदेदीप्यमानः ।
बालग्लौशोभिभालः श्रितगरलगलः क्षीरकुन्देन्दुगौर स्सद्वोराजाधिरूढः प्रमथपरिवृत श्शङ्करोमे हृदिस्तात् ।९३।

सतथोक्तः पु० की० सर्वस्मिन् अङ्गेशरीरे सर्वेष्वङ्गेष्ववयवेषुवा भ्राजिनश्शोभिनः नानाविधाबहुविधाः ये भुजगवराउरगोत्तमाः तेषाम् ये व्रातास्समूहाः तैः देदीप्यमानः पु० की० बालोद्वितीयासम्बन्धित्वादतिलघुः यः ग्लौश्चन्द्रमाः हिमांशुश्चन्द्रमाश्चन्द्रइन्दुःकुमुदबान्धवः विधुस्सुधांशुश्शुभ्रांशुरोषधीशोनिशापतिः अब्जोजैवातृकस्सोमोग्लौर्मृगाङ्कः कलानिधिः द्विजराजश्शशधरोनक्षत्रेशःक्षपाकरइत्यमरः तेन शोभते तथाभूतोभालोमस्तकंयस्य सतथोक्तः पु० की० श्रितगरलोगलोयस्यसतथोक्तः पु० की० क्षीरकुन्द्रेन्दुगौरोदुग्धादिवच्छुभ्रः पु० की० सद्वोराजाधिरूढः उत्तममहोक्षश्रितः

पु. की. प्रमथैर्निजगणैः परिवृतस्सर्वतोव्याप्तः ॥ ९३ ॥ अथध्यानान्तरमाह दीनानामिति गिरिसुतयाश्रीपार्वत्या सहसा-
र्द्धम् महेशःश्रीशङ्करः मेमम हृदिहृदयावकाशे स्तात्भवतु कीदृशोमहेशः दीनानामनाथानांशरणागतानाम् दैन्यनाशेदीन-
तानिवारणे सुसितकटितटोनिबद्धमध्यः पु. की. शत्रुवर्गे स्वतत्त्वाज्ञानात् वैरीभूतानाम् जनानाम् समूहे सङ्कटोमहा-

वीरः पु. की. योगाभ्यासातिलग्नानांयोगिनाम् स्थिरतरगतिदः कैवल्यमुक्तिप्रदाता पु. की. स्वयम् स्वस्वरूपे सक्तंलग्नम्

दीनानान्दैत्यनाशे सुसितकटितट स्सङ्कट श्शत्रुवर्गे योगाभ्यासातिलग्नस्थिरतरगतिद स्सक्तहृत्स्वस्वरूपे ।
दिग्वासाश्चारुहास स्स्फटिकसिततनुर्भानुवह्नीन्दुनेत्रः कैवल्योल्लासिदेश स्सह गिरिसुतया मे हृदिस्तान्महेशः ।९४।

हृन्मनोयस्यसतथोक्तः सदात्मचिन्तनपरायणइत्यर्थः पु० की० दिग्वासादिगम्बरः पु० की० चारुहासस्सर्वदाऽनन्दमय-
त्वान्मनोहारिमुखविकासः पु० की० स्फटिकवत् सिताशुभ्रा तनुश्शरीरंयस्यसतथोक्तः पु० की० भानुवह्नीन्दवोनेत्राणि-
यस्यसतथोक्तः पु. की. कैवल्योल्लासीकैवल्यमुक्तिप्रकाशी देशःकाश्याख्योविषयोयस्यसतथोक्तः ॥ ९४ ॥ अथध्यानान्तर- 
माह कन्दर्पेति गिरीशश्श्रीमहादेवः मेमम हृदि स्तात् कीदृशोगिरीशः कन्दर्पस्यात्रिभुवनविजयिनःकामदेवस्य अपारो-
ऽनन्तोयोदर्पोलोकोत्तरसौन्दर्याभिमानः तस्य प्रकर्षेणविशेषेण विजयिविजयशीलम् अतएव विलसद्विलसनङ्कुर्वत्

अतएव चारु द्रष्टृजनमनोहरम् यत् लावण्यंरमणीयताचमत्कारविशेषः तेनशोभते तच्छीलस्सतथोक्तः पु. की. भियो- निष्क्रान्तोदूरवर्त्तीतिनिर्भीकः निर्भयपदस्थइत्यर्थः पु. की. शरणगमनसाम् भीतिम् नाशयत्यपसारयतीतितच्छीलस्स- तथोक्तः पु. की. भीषणानाम्भयङ्कराणाम् सुभीदोऽतिभयदायी पु. की. चञ्चन्नत्युज्ज्वलः यः कङ्कालोनिर्गतत्वङ्मांसंशरी-

कन्दर्पाऽपारदर्प्पप्रविजयिविलसच्चारुलावण्यशोभी निर्भीको भीतिनाशी शरणगमनसाम्भीषणानां सुभीदः ।
चञ्चत्कङ्कालधारी दरडमरुकरश्शूलपाणि र्जटालः कण्ठेकालःकरालस्स्वविमुखमनसां मे हृदिस्ताद्गिरीशः ।९५।

प्रौढाऽज्ञानान्धकारप्रचुरतरभरव्याप्तमत्स्वान्तगेहे तत्त्वज्ञानप्रदीपं सुकृतवरदशम्भक्तितैलप्रपूर्णम् ।
प्रज्वाल्य स्वप्रभावान्निवस पशुपते सर्वदालोकनाथश्रीशम्भोचन्द्रमौले भवभयहृतये चिन्तयेऽहम्भवन्तम्।९६।

रास्थि तम् धरति हस्तेगृह्णातीतितच्छीलः सतथोक्त पु. की. दरडमरुकरः शङ्खडमरुहस्तः पु. की. शूलपाणिः पु. की. जटालः पु. की. कण्ठेकालः पु. की. स्वविमुखमनसांनिजद्वेषिणाम् करालोऽतिभीतिप्रददर्शनः ॥ ९५ ॥ अथध्यानान्तर- माह प्रौढेति हेपशुपते श्रीशङ्कर प्रौढाऽज्ञानान्धकारस्य प्रचुरतरोबहुलतरः योभरोऽतिशयः तेन व्याप्तेमलिनीकृते

मत्स्वान्तगेहे मदीयहृदयमन्दिरे स्वकरुणया सुकृतवरातिपवित्रतरपुण्यानि दशावर्त्तिर्यस्मिंस्तथाभूतम् पु० की० भक्तितैलप्रपूर्णम् स्वभक्तिस्नेहसम्भृतम् सन्तम् तत्त्वज्ञानमेव स्वस्वरूपाववोधएवप्रदीपः तम् स्वप्रभावत् स्वमाहिम्नः प्रज्वाल्यप्रकाश्य त्वम् निवस सर्वदानिवासम् विधेहि एतावताकिमितिचेदतआह हे लोकनाथ जगदीश हेश्रीशम्भो हेचन्द्रमौले भवभयहतये संसारभीव्यपगमाय मयन्तन्त्वाम् अहम् चिन्तयेस्मरामि ध्यायामीतियावत् ॥ ९६ ॥ अथध्यानान्तर-



एतस्माद्दुःखभारा द्गदितुमतितरां वस्तुतोऽशक्यरूपा दत्यन्त न्दुस्सहान्मा मतिविकलहृदं नष्टसाहाय्यगन्धम् ।
हेदीनानाथनाथ त्वरितमऽजविभो रक्षरक्षानलाक्ष श्रीगौरीपक्षदक्ष स्फटिकगिरिरुचे चन्द्रमौले भजेत्वाम् ।९७।

माह एतस्मादिति हेदीनानाथनाथ हे अकिञ्चनाशरणजनस्वामिन् हेअजस्वयम्प्रकाश हेविभोसर्वान्तरात्मन् वस्तुतोयाथार्थ्यतः अतितराम् गदितुंव्याख्यातुम् अशक्यम् अयोग्यम् रूपम् यस्य तस्मात् अतएव अत्यन्तम् दुःस्सहन्दुःखेनापिसोढुमशक्यात् एतस्माम् अनुभवविषयात् सांसारिकात् दुःखभारात् क्लेशबाहुल्यात् त्वरितञ्झटिति त्वम् माम् रक्षरक्षमोचयमोचय वीप्सायान्द्विरुक्तिः कीदृशंमाम् अतिविकलहृदम् अतिव्याकुलमानसम् पु० की० यतः नष्टसाहाय्यगन्धमयगतसाहाय्यलेशम् सहायताशून्यमितियावत् अतएव हेअनलाक्ष वह्निनेत्र त्रिनयन सङ्ख्याप्रकरणे अनलस्यत्रिसङ्ख्या-

बोधकत्वात् अथ हेश्रीगौर्य्याः श्रीपार्वत्याः पक्षदक्ष साहाय्यकुशल तथा हेस्फाटिकगिरिरुचे अतिसितकान्ते तथा हेच-न्द्रमौले अहम् त्वाम् भजेसेवे ध्यायामीत्यर्थः ॥ ९७ ॥ अथध्यानान्तरमाह आत्मेति शिवेशः श्रीपार्वतीशः मम हृदिह-दयावकाशे वसतु ध्यानगम्योभवतु कीदृशश्शिवेशः आत्मारामः पूर्णकामत्वात् स्वानन्दनिमग्नः पु० की० अभिरामोभ-क्तजनमनोहरः पु० की० अजरवरेषुसुरश्रेष्ठेषु परमः उत्कृष्टः पु० की० भव्यकामस्स्वदेवनिजजनकल्याणकृत्सङ्कल्योऽपि

आत्मारामोऽभिरामोऽजरवरपरमोभव्यकामोऽप्यऽकामोदिव्याचारोऽप्यऽनाचारसमनुरतधीर्भीकरोऽभीकरोपि।
डिण्डीरक्षीरहीरस्फटिकशशकभृत्कुन्दसत्कीर्त्तिगौरस्त्र्यक्षोलक्ष्योऽप्यलक्ष्योवसतुहृदिसमेमोचकेशश्शिवेशः।९८।

अकामस्सङ्कल्परहितइतिविरोधः जितकन्दर्पइतीतिविरोधाभावः पु० की० दिव्याचारोऽपि पवित्रतरसमाध्यवस्थानरूपाच-रणोऽपि अनाचारे श्मशानवासादिरूपे समनुरताऽतिप्रीतिमती धीर्बुद्धिर्यस्य सः इतिविरोधः मायातीतस्वरूपत्वाद् नास्ति आचारसमनुरता धीर्यस्यसइत्यविरोधः पु० की० अभीकरोऽपि अभयकार्य्यपि भीकरोभयकारीतिविरोधः भया-पहारकइतिविरोधाभावः पक्षे करइति कविक्षेपे इत्यस्यप्रचाद्यचिरूपम् पश्चात् षष्ठीतत्पुरुषः पु० की० डिण्डीरक्षीरहीर-स्फटिकशशकभृत्कुन्दवत् फेनदुग्धवज्रशुभ्रमणिविशेषचन्द्रमाध्यपुष्पवत् यालतीशुभ्रतयासमीचीना कीर्त्तिः तया गौर-

म्द्युम्नकान्तिः यद्वा डिण्डीरादिवद्गौरः पु० की० त्र्यक्षस्त्रिनेत्रः पु० की० लक्ष्योऽपि सगुणमूर्त्तित्वाद्दर्शनीयोऽपि अलक्ष्य-
इतिविरोधः गुणातीतस्वरूपत्वाच्चर्मचक्षुरविषयइतिविरोधाभावः पु० की० व्योमकेशोव्योमकेशः ॥ ९८ ॥ अथध्याना-
न्तरमाह श्रीमन्निति हेश्रीमन् भोनीलकण्ठ त्रिभुवनपतयेऽखिलब्रह्माण्डनायकाय तेतुभ्यम् मदीयम्मत्सम्बन्धि नमोनम-
स्कारः स्तादस्तु अथच त्वाम् श्रीमन्तम्भवन्तम् अहम् पृच्छामि किमितिचेदतआह एतदितिहस्ताभिनयेनज्ञापनम् नील-



श्रीमन्भोनीलकण्ठ त्रिभुवनपतये ते नमस्स्तान्मदीय म्पृच्छामित्वाङ्किमर्थ न्धृतामिह भवतानीलकण्ठत्वमेतत् ।
आज्ञातश्चेष्टितेतेहरिगिरितनयाप्रेरणा वारणाभ्यान्त्र्यक्ष म्पक्षंसतान्त्वांहृदि भसितासितं साद्रिजन्धारयामि ।९९।

कण्ठत्वम् सकललोकदाहातिकुशलसमुद्रमथनोद्भूतगरलक्षोभिगलत्वम् इहजगति भवता श्रीविष्ण्वादिसद्भावेऽपित्वयै-
वेत्यर्थः किमर्थन्धृतम् अङ्गीकृतम् इतिप्रश्नेकृतेऽपिप्रतिभास्फूर्त्तौ आहइतिस्वतएवोत्तरलाभाह्लादसूचकमव्ययम् हेभगवन्
तेतव चेष्टितमाचरितम् ज्ञातम्बुद्धम् मयेतिशेषः किमितिचेदतआह हरिगिरितनययोः श्रीविष्णुपार्वत्योः प्रेरणावारणा-
भ्याम् हरिकर्त्तृकयाप्रेरणया गिरितनयाकर्त्तृकयावारणयाचेत्यर्थः जगद्रक्षार्थम् गरलपानाय हरिणाप्रेरणाविहिता भवन्मृ-
त्युसम्भावनया गिरितनयया वारणाविहिता भवतातु तयोर्द्वयोरेवपरितोषार्थम् कण्ठेतद्धारणेननीलकण्ठत्वन्धृतमिति-

सवसमञसमेव अतएव त्र्यक्षम् जगत्त्रयरक्षार्थम् धृतनेत्रत्रयम् अथ सतांसज्जनानाम् पक्षंसहायम् अथ सितेनातिशुभ्रेण भसितेनभस्मनासितंशुभ्रम् यद्वा सितमपिभसितम् सितंयेन सतम् अथ साद्रिजंश्रीपार्वतीसहितम् त्वाम् हृदिहृदयावकाशे धारयामि ध्यायामीत्यर्थः ॥ ९९ ॥ अथध्यानान्तरमाह पूर्णेति अथविशेषणमहिम्ना श्रीशङ्करम् अहम् भजेसेवेध्यायामी-तियावत् कीदृशम् पूर्णब्रह्मस्वरूपम् मायाविकारविरहितस्वरूम् पु० की० सुजटिलेशोभनजटाके शिरसिमूर्द्धि चार्वनूपम्

पूर्णब्रह्मस्वरूपं शिरसिसुजटिले चार्वनूपंविरूपं नेत्रेषुस्वर्गिभूपं निजजनमनसान्ध्वंसिताऽज्ञानकूपम् ।
आशावासोवसानं मरुदशनलसद्भूषण न्दूषणारिप्रौढप्रीत्येकपात्राङ्घ्रिरिपरि वृढजाशोभिगात्र म्भजेऽहम् १००

शिरस्स्थगङ्गत्वात्सजलप्रायप्रदेशमूर्द्धानमित्यर्थः पु० की० नेत्रेषुत्रिषुनयनेषु विरूपम् विकृतरूपम् विशिष्टरूपंवा विरू-पाक्षमित्यर्थम् पु० की० स्वर्गिणामिन्द्रादीनाम् भूपंराजानम् देवदेवमित्यर्थः पु० की. निजजनमनसांस्वभक्तमानसानाम् ध्वंसितोविनाशितः अज्ञानकूपः जन्ममरणादिदुःखरूपसंसारकारणाज्ञानरूपःप्रहिः येन सतथोक्तस्तम् पुंस्यवान्धुःप्रहिः कूपइत्यमरः पु. की. आशावासोवसानम् दिगम्बरम् पु. की. मरुदशनाःपवनाशिनः सर्प्पाएव लसन्तिशोभनानि भूष-णानि कटककुण्डलादीन्याभरणानियस्यसतम् पु. की. दूषणारेर्दूषणनामकराक्षसविशेषशत्रोःश्रीरामस्यप्रौढाद्दृढायाप्रीतिर्भ-

कत्याभिन्नोऽनुरागः तस्याः एकपात्रंमुख्यभाजनम् श्रीरामोपास्यदेवमितियावत् यद्वा दूषणानाङ्कृतघ्नत्वादिदोषाणाम् अरयश्शत्रवः तिरस्कर्त्तारइतियावत् तेषाम् प्रौढादृढाया प्रीतिः भक्तिसंस्कृत स्स्नेहः तस्याः एकपात्रंमुख्यमाजनम् निर्दोषजनभक्त्येकाश्रयमित्यर्थः पु० की० गिरिपरिवृढजया श्रीगौर्या शोभि अलङ्कृतम् गात्रंशरीरम् यस्यसतम् ॥ १०० ॥ अथध्यानान्तरमाह कैलासइति अहम् श्रीमहेशंमहाप्रभुंश्रीशङ्करम् स्मरामिध्यायामि कीदृशंश्रीमहेशम् चिरतरचितेबहुकाल-

कैलासेस्वादृहासे रुचिरतरचिते सद्वटाधःप्रदेशे सैंहश्चर्म्माऽतिरम्यं मृदुल मुरुतरं सम्यगाश्रित्य संस्थम् ।
नासाग्रस्थायिदृष्टिं स्थिरवरवपुपद्मजानुयुग्मस्थहस्तश्चन्द्रापीडं मुकेश्रंसभसितभुजगं श्रीमहेशं स्मरामि ॥१०१॥

सञ्चिते स्वस्यात्मनः अट्टहासे सायन्तनप्रतिदिनताण्डवासरमवे महोद्धते हासे व इव वशब्दोऽप्येवार्थे वम्प्रचेतसिजानीयादिवार्थेचतदव्ययमितिमेदिनी स्थिते कैलासे स्वनिवासस्थानेपर्वतविशेषे सन् विशालत्वादिना उत्तमोयोवटोन्यग्रोधोवृक्षः न्यग्रोधोबहुपाद्वटइत्यमरः तस्य अधःप्रदेशेनीचैस्स्थले सैंहंमृगेन्द्रसम्बन्धि रम्यमतिदर्शनीयम् मृदुलंसुस्पर्शम् उरुतरमतिविस्तृतम् चर्म्माऽजिनम् अजिनञ्चर्म्मकृत्तिस्स्त्रीत्यमरः सम्यग्विधिपूर्वकम् आश्रित्याऽधिष्ठाय संस्थम् योगाभ्यासार्थम् साधुस्थितम् पु० की० अतएव नासाग्रस्थायिनीदृष्टिर्यस्यसतम् अनेनपद्मासनंसूचितम् पु० की० अतएव

स्थिरतरवपुषमचञ्चलकायम् पु० की० जानुयुग्मे ऊरुपर्वद्वये तिष्ठतः तथाभूतौ हस्तौकरौ यस्यसतम् जानूरुपर्वाऽष्ठीव-दस्त्रियामित्यमरः पु. की. चन्द्रापीडंशशिशेखरम् शिखास्वापीडशेखरावित्यमरः पु. की. सुशोभनाः निर्म्मलत्वादिना-ऽतिदर्शनीयाः केशाःकचाः यस्यसतम् कचाःकेशाश्शिरोरुहाइत्यमरः पु. की. भसितम्भस्म भुजगाः कटककुण्डला-दिभूषणभूतास्सर्पाश्च तैस्सहवर्त्तते सतथोक्तस्तम् ॥ १०१ ॥ अथध्यानान्तरमाह रुद्राक्षेति अहम् शङ्करंश्रीमहादेवम्

रुद्राक्षाऽलङ्कृताङ्गं सितकिरणसितश्चारुभस्मत्रिपुण्ड्रम्बालेन्दुभ्राजिभालं मघवमणिगलङ्कुण्डलीन्द्रोरुमालम् ।
श्रीगौरीभूषिताङ्कं विबुधवरनुतंसेवितङ्किन्नराद्यैः षड्वक्त्रैभास्यलीलामुदितहृदयं शङ्करंसंस्मरामि ॥ १०२ ॥

संस्मरामिध्यायामि कीदृशंशङ्करम् रुद्राक्षैः अलङ्कृतम्भूषितम् अङ्गंशरीरम् अलङ्कृतानि अङ्गान्यवयवावायस्यसतम् पु. की. सितकिरणइवसुधांशुरिव सितोगौरस्तम् पु. की. चारूरमणीयः भस्मत्रिपुण्ड्रोयस्यसतम् पु. की. बालेन्दुभ्रा-जिभालंशिशुशशिशोभिमस्तकम् पु. की. मघवमणिरिन्द्रनीलमणिः तद्वद्गलःकण्ठोयस्यसतम् पु. की. कुण्डलीन्द्रस्स-र्पराजोवासुकिः उर्वीमहती मालास्रक् यस्यसतम् पु. की. श्रीगौर्याभूषितः अङ्कउत्सङ्गोयस्यसतम् पु. की. विबुधव-रैरिन्द्रादिभिः नुतस्स्तुतस्तम् पु. की. किन्नराद्यैर्देवयोनिविशेषैः सेवितंसर्वतः समाश्रितम् आद्यपदेन विद्याधरादिग्रहः

विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः पिशाचोगुह्यकस्सिद्धोभूतोऽमीदेवयोनयइत्यमरः पु. की. षड्वक्त्रेभास्यलीलाभिः नानाविधाभिः कार्त्तिकेयगणपतिखेलाभिः प्रमुदितमतिःहृष्टम् मनोयस्यतम् ॥ १०२ ॥ अथध्यानान्तरमाह हेश्रीमन्निति हेश्रीमन्महैश्वर्य्यादिसम्पन्न हेदेवदेव सर्वदेवसंसेव्य त्रिभुवनविषयेत्रिलोकीगोचरे सकलब्रह्माण्डे इतियावत् विषयोगोचरेदेशेतथाजनपदेऽपिचेतिमेदिनी त्वदन्योभवदतिरिक्तोदेवादिकः मुक्तिकृन्मुक्तिप्रदः कः नकोऽपीत्यर्थः धन्यःपुण्यवा





हे श्रीमन्देवदेव त्रिभुवनविषये मुक्तिकृत्कस्त्वदन्यो धन्योऽगण्योवदान्यस्सनिगमवचनै रागमैश्चा ऽतिमान्यः ।
त्वामेवातो नितान्तम्भवितततयशसं सर्वदासर्वदार्चे सेवेसाम्बेन्दुमौले सगुहगणपते स्वान्तरङ्गे निधाय ॥१०३॥

न्पुण्यस्वरूपश्चकः नकोऽपीत्यर्थः धन्यःपुण्यवतित्रिषुइतिमेदिनी अथच अगण्यस्सङ्ख्यातुमशक्यः अनन्तत्वादतीन्द्रियत्वाच्च त्वदन्यःकः नकोऽपीत्यर्थः अथच वदान्योऽभिलषितादपि अधिकप्रदः त्वदन्यःकः नकोऽपि अथच सनिगमवचनैस्सवेदवचोभिः आगमैश्शैवसिद्धान्तप्रपञ्चसम्भृतैश्शैवागमादिभिश्च अतिमान्योऽत्यन्तसत्करणीयः त्वदन्यःकः नकोपीत्यर्थः अतोऽस्मात्कारणात् हे साम्बसपार्वतीक हेइन्दुमौले चन्द्रमाल हेसगुहगणपते सस्कन्दगजानन स्वान्तरङ्गेनिजान्तःकरणे निधायस्थापयित्वा नितान्तमतिशयेन अतिशयोभरः अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् तीव्रैकान्तनि-

तान्तानिगाढवाढदृढानिचेत्यमरः प्रविततमतिविस्तृतम् यशोयस्य सतम् यतस्सर्वदा मनोऽभिलषितपदार्थमात्रप्रदा अर्थ्यासिवायस्यसतम् सर्वदा त्वामेव सेवेभजे ध्यायामीत्तितियावत् ॥ १०३ ॥ अथध्यानान्तरमाह बुद्धिरिति हेचन्द्रभाल निजनियतिवशात्स्वदुर्भाग्यप्रभावात् मेमम बुद्धिर्म्मतिः मन्दमन्दा अतिशिथिला अस्तीतिसर्वत्रशेषः अथच ततएव मयि- विषये लक्ष्मीः उदारावितरणोत्साहशालिनी नास्ति अथच ममेतिशेषःवाग्देवी देवीसरस्वती कविवरकवितासारभाराव-

बुद्धिर्म्मेमन्दमन्दा निजनियतिवशान्मय्युदारान लक्ष्मीर्वाग्देवीनातिपुष्टा कविवरकवितासारभारावलम्बे ।
एतत्साध्येनुकार्ये बलविकलतया संश्रयेचन्द्रभालत्वामेवा ऽहम्पुरारेवस ममहृदये शैलपुत्र्यासहत्वम् ॥१०४॥

लम्बे महाकविकवित्वरहस्यगुरुत्वसमाश्रयणे अतिपुष्टा शुभाशक्तिशालिनी नास्ति अतएव एतत्साध्ये पूर्वोक्तबुद्ध्यादिव पसम्पादनीये कार्य्ये तत्तत्समयागतकर्म्मणि नुवितर्क्के बलविकलतया सामर्थ्यशून्यत्वेन अहम् त्वामेव स्वजनसर्वका- र्य्यसाधनोत्सुकम्भवन्तमेव संश्रये अधितिष्ठामि अतएव हेपुरारे महोपद्रवकारित्रिपुरासुरशत्रो शैलपुत्र्याश्रीगौर्यासह त्वम् ममहृदये वसवासङ्कुरु ॥ १०४ ॥ अथध्यानान्तरमाह सन्मुकेति हेशम्भो हेभव हेनीलकण्ठ हेस्मरारेकामारे हेवि- बुधवर्य्यैस्स्वतत्त्ववेदिभिर्विद्वद्भिः अभिनुतमहिमन् अभिष्टुतमहत्त्व एताम् विज्ञप्तिम् मत्कृतांविज्ञापनाम् प्रार्थनामितितियावत्

त्वम् सिद्धिसफलताम् नयप्रापय एताङ्कांविज्ञप्तिमितिचेदतआह अहम् तव कृपया आत्मनस्स्वस्वरूपस्य वेत्ताज्ञाता स्याम् आत्मवित् भवानीतियावत् कीदृशोऽहम् द्वयोरुभयोः चरणसरसिजध्यानसंसक्तचेताः पादपद्मध्यानानुरागवान् कयो- र्द्वयोः वांयुवयोर्भवतोः वाङ्कयोः पार्वत्याःपर्वतराजपुत्र्याःश्रीभगवत्याः श्रीमद्भवद्धर्म्मपत्न्याः तेतवच कीदृश्याःपार्वत्याः सन्मुक्तास्रग्धरायाः महोत्तममौक्तिकमालाशोभिन्याः कीदृशस्यचतेभुजगपतिर्वासुकिरेव लसन्तीप्रकाशमाना स्रङ्माला

सन्मुक्तास्रग्धराया भुजगपतिलसत्स्रग्धरस्यद्वयोर्वा म्पार्वत्यास्ते च शम्भो चरणसरसिजध्यानसंसक्तचेताः ।

वेत्तास्यामात्मनोऽहम्भवतवकृपयानीलकण्ठस्मरारेविज्ञप्तिविज्ञवर्य्यैऽरभिन्नुतमहिमन्सिद्धिमेतांनयत्वम् १०५

तस्याः धरस्तस्य ॥ १०५ ॥ अथध्यानान्तरमाह मत्येति हेश्रीमन्पूर्णैश्वर्य्य हेविश्वनाथ सकलब्रह्माण्डाधिपते त्वदन्योभव- दतिरिक्तः मत्या आत्मज्ञानविषयिण्याप्रज्ञया वृत्त्या सञ्जीविकया शुभेनमनोविकाराविशेषेणवा प्रकृत्या सुस्वभावेन निज- पदकमलद्वन्द्वरत्या स्वाङ्घ्रिपङ्कजद्वयभक्त्या सुगत्या विमुक्तिलक्षणयासद्गत्याच उच्चैरत्यन्तम् अलङ्कृत्य जीवनावस्था- याम् भूषयित्वा स्वभक्तान्निजसेवकान् भवभयविमुखाञ्जन्ममरणदुःखभीतिपराङ्मुखान् जीवन्मुक्तान् कः करोति नको- ऽपीत्यर्थः अतएव हेत्रिनयन हेलोकत्रयरक्षार्थन्धृतनेत्रत्रय हेकरुणावारिधे कृपाब्धे हेनीलकण्ठ स्वमात्मीयम् शिशुम् ॥ ५३ ॥

बालम् सर्वस्मिन्विषये अप्रौढमितियावत् माम् त्रायस्व त्वम् रक्ष अथच हेपार्वतशिगौरीपते सर्वदा मम हृदये वसनि-
वासङ्कुरु ॥ १०६ ॥ अथध्यानान्तरमाह राजदिति शिवेशः श्रीगौरीशः सर्वदा मेमम हृदये निवसतु ध्यानविषयो-
भवतु कीदृशश्शिवः राजद्राजीवराजिग्रथितकचभरोरम्याम्बुजपङ्क्तिसम्बद्धकेशकलापः राजिःस्त्रीपङ्क्तिलेखयो-

मत्या वृत्त्या प्रकृत्या निजपदकमलद्वन्द्वरत्या सुगत्याऽलङ्कृत्योच्चैस्स्वभक्तान्भवभयविमुखान्कः करोतित्वदन्यः ।
हे श्रीमन्विश्वनाथत्रिनयन करुणावारिधेनीलकण्ठत्रायस्वस्वंशिशुंमां वसममहृदयेसर्वदा पार्वतीश ॥ १०६ ॥

राजद्राजीवराजिग्रथितकचभरो भ्राजिभस्मत्रिपुण्ड्रो लोलत्कल्लोलजालोल्लसितसुरसारिद्रम्यभालो ऽहिमालः ।
दिग्वासास्साट्टहासश्शिशुशशधरभृन्नाग भूपावृत्ताङ्गोदग्धानङ्गोऽप्यऽनङ्गो निवसतुहृदये सर्वदामेशिवेशः ॥ १०७ ॥

रितिमेदिनी पु० की० भ्राजिभस्मत्रिपुण्ड्रश्शोभमानविभूतिरेखात्रयः भस्मत्रिपुण्ड्रशोभितमस्तकइतियावत् पु० की०
लोलत्कल्लोलजालैश्चलन्महातरङ्गपटलैः उल्लसिताऽतिशोभिता यासुरसरित् श्रीगङ्गा तया रम्यभालोमनोहरललाटः
पु० की० अहिमालोभुजङ्गस्रक् पु० की० दिग्वासादिगम्बरः पु० की० अट्टहासेनसायन्तनेनसोच्चैश्शब्देनहासेन सहवर्त्त-

तेसतथोक्तः पु० की० शिशुशशधरभृत् बालेन्दुधारी पु० की० नागभूषाभिस्सर्प्पभूषणैः आवृतानिव्याप्तानि अङ्गान्यव-
यवायस्यसतथोक्तः पु० की० अनङ्गोऽपि अतीन्द्रियत्वात् अङ्गशून्योऽपि दग्धोऽनङ्गोयेनसतथोक्तः इतिविरोधः अनङ्गोऽ-
तिसुन्दरत्वात्साक्षात्कन्दर्प्पइतिविरोधाभावः अप्यनङ्गइत्यत्रसदङ्गइतिवापाठः सदुत्तममङ्गंसरीरंयस्यसतथोक्तः ॥ १०७ ॥
अथध्यानान्तरमाह रत्नोद्भासीति रत्नोद्भास्यङ्घ्रीत्यादिविशेषणपञ्चकप्रकाशितस्वरूपः श्रीशङ्करः मम आत्तमाश्रितम् अन्त-

रत्नो द्भास्यङ्घ्रिपीठच्छविसुरमुकुटद्योतविद्योतिताङ्ग श्चञ्चद्भस्माङ्गरागस्सुरसरिदमलप्रोच्चवीच्युत्तमाङ्गः ।
सुस्पर्शोच्चाहिशावव्रजकलितलसद्भूषणोद्भूषिताङ्गः प्रोत्तुङ्गाभङ्गसङ्गस्थिराविशदयशास्स्तान्मदाप्तान्तरङ्गः ।१०८।

रङ्गमन्तःकरणम् येन एवम्भूतः स्तान्द्भवतु मद्ध्यानगोचरीभवत्वित्यर्थः की० इ० रत्नोद्भासि नानाविधमणिप्रकाशि यत्
अङ्घ्रिपीठम् तस्य या छविर्दीप्तिः तया सुरमुकुटद्योतश्च दर्शनार्थागतामरकिरीटप्रकाशश्च तेनच विद्योतितं समुल्लासितम्
अङ्गंशरीरंयस्यसतथोक्तः पु० की० चञ्चद्भस्मैवसमुज्ज्वलविभूतिरेव अङ्गरागोविलेपनंयस्यसतथोक्तः पु० की० सुरसरि-
दमलप्रोच्चवीचयोनिर्झरधुनीविमलोन्नततरङ्गाः उत्तमाङ्गेशिरसियस्यसतथोक्तः पु० की० सुस्पर्शाअतिमृदुलाः उच्चाउत्त-
मजातीयाः ये अहिशावाः सर्प्पशिशवः तेषाम् व्रजैस्समूहैः कलितानिराचितानि लसन्तिकान्तिमन्ति यानिकटककुण्ड- ॥ ५४ ॥

लादीनिभूषणानि तैः उद्भूषितानि अतिशोभितानि अङ्गानिपदाब्जादयोऽवयवाः यस्यसतथोक्तः पु० की० प्रोत्तुङ्गमत्युन्नतम् अभङ्गसङ्गमविच्छिन्नसम्बन्धम् अतएव स्थिरमचलम् विशदंशुभ्रम् यशः शरणागतजनसमुद्धारकत्वादिजनिता कीर्त्तिर्यस्यसतथोक्तः ॥१०८॥ अथसप्रार्थनन्ध्यानान्तरमाह सर्वेति हेदेव हेसर्वान्तरात्मन् सकलजगदभिन्नस्वरूप इहेदमेवध्यानस्वरूपमवधार्य्यम् सर्वान्तर्य्यामिणंसकलप्राणिमनःप्रेरकम् श्रुतिनुतंसर्ववेदस्तुतमहिमानम् अतएव अजितमनति-

सर्वान्तर्य्यामिणन्त्वां श्रुतिनुतमऽजितन्देवसर्वान्तरात्मन्नाश्रित्यैवात्रकाश्याम्भवभयहृतयेऽयं मयाऽकारिवासः।
विश्वस्मिन्नत्रनान्यङ्गुरुमऽखिलगुरोजातुजानामिशम्भोस्वामिन्नऽग्रेदयालोतवमनसिभवेद्यत्प्रभोतद्विधेहि।१०९

शयप्रभावम् त्वामेवभगवन्तम्भवन्तमेव आश्रित्यसमधिष्ठाय भवभयहृतयेजन्ममरणभीत्यपगमाय भवभयहतये इतिपाठेऽप्ययमेवार्थः अत्रास्याङ्काश्यांश्रीवाराणस्याम् वासोनिवसतिः स्थितिरितियावत् मया अनन्यगतिकेनलक्ष्मीनारायणेनकविना अकारिविहितः किम्बहुना हेशम्भो हेअखिलगुरो हेसर्वपूज्य अत्रास्मिन्विश्वास्मिन् जगति जातुकदाचित् अन्यन्त्वदतिरिक्तम् कमपि देवादिकम् गुरुंमहान्तम् नजानामिनवेद्मि भजामीतिकिमुवक्तव्यम् इदमेवध्यानस्वरूपमत्रावधेयम् अग्रेऽतःपरम् हेस्वामिन्हेजगत्पते हेदयालो हेप्रभोसर्वसमर्थ तव मनसिचित्ते यत्करणीयम् भवेद्वर्त्तेत तत् त्वम् विधेहिकुरु

॥ १०९ ॥ अथैतच्छ्रीशङ्करध्यानरत्नमालानुष्ठानोपदेशमाह इमामिति इमाम्पूर्वोक्तस्वरूपाम् श्रीशङ्करध्यानरत्नमालाम् एतन्नामधेयम् निबन्धम् मुदाप्रीत्या हृदिमनसिनिधायपरिशील्य सन्तस्सज्जनाः आशुस्वल्पेनैवसमयेन भवदुःखविवर्जिताःमुक्तिभाजः सन्तुभवन्तु निबन्धावसाने आशीर्वादात्मकंमङ्गलमिदम् ॥ ११० ॥ अथैतन्निबन्धनिर्म्मितिसमयन्दर्शयति अक्षयङ्गाङ्केति अक्षयङ्गाङ्कमहीमाने अङ्कानांवामतोगतिरितिसमयात् द्व्यधिकषष्ठ्यधिकैकोनविंशतिशतसङ्ख्याके वत्सरेवैक्र-

इमां श्रीशङ्करध्यानरत्नमालां मुदा हृदि। सन्तो निधाय सन्त्वाशु भवदुःखविवर्ज्जिताः ॥ ११० ॥

अक्षयङ्गाङ्कमहीमाने वत्सरेकार्त्तिके सिते। लक्ष्मीनारायणेनेयं शङ्करप्रीतये कृता ॥ १११ ॥

इतिश्रीमत्कौशल्यगोत्रोद्भवसारस्वतकुलतिलकश्रीमत्पण्डितठाकरदत्तशर्म्मान्तेवासिकविवरलक्ष्मीनारायणविरचिताश्रीशङ्करध्यानरत्नमालासम्पूर्णा शुभम्।

मेवर्षे कार्त्तिकमासे सिते शुक्लेपक्षे इयम् श्रीशङ्करध्यानरत्नमाला नवाधिकशतसङ्ख्याकश्रीशङ्करध्यानमणिस्रक् लक्ष्मीनारायणेन लक्ष्मीनारायणनामधेयेनकविवरेणमयेतिशेषः शङ्करप्रीतये त्रिभुवनपतिश्रीमन्महादेवतुष्ट्यै कृताविहिता अत्रापि लक्ष्मीनारायणशङ्करशब्दाः निबन्धपरिपूर्णतायाम् मङ्गलसूचकाः ज्ञेयाः ॥ १११ ॥ नयनाङ्गाङ्कशशिमितेवर्षेमाघेसितेतिथौ-विष्णोः स्वनिबन्धोपरिविहितालक्ष्मीनारायणेनविवृतिरियम ॥ १ ॥ इतिश्रीमत्कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणशर्मविरचिता स्वकृतश्रीशङ्करध्यानरत्नमालाव्याख्या प्रभाख्या परिपूर्णतामगात् ॥ सं० १९६४ ज्यै. शु. पू. भौ.

# शुद्धिपत्रम् ।

| प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. | प. | पृ. | प. | अ. | शु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | १ | ४ | ंव्र | च्व | ४ | २ | १ | या | यो | ६ | १ | ४ | राव | रोवि |
| ,, | ,, | १२ | द्द | द्दृ | ,, | ,, | २ | ति | ती | ,, | ,, | ९ | ङ् | ङ्क |
| ३ | ,, | ४ | भु | भू | ,, | ,, | ८ | ह | हे | ,, | ,, | ११ | ङ्ग | ङ्क |
| ,, | ,, | १० | त् | त | ,, | ,, | ६ | रगङ्ग | रङ्ग | ,, | ,, | १२ | क्त | क्य |
| ,, | २ | ४ | ण | षणं | ५ | १ | ७ | ठ | ठं | ,, | २ | ३ | हमे | हेम |
| ,, | ,, | ७ | न्ह | ह्न | ,, | २ | ३ | ड | ड् | ,, | ,, | ८ | न्द्र | न्द्रः |
| ४ | १ | ८ | म | म् | ,, | २ | २ | दें | दे | ,, | ,, | ९ | क्तः | क्ताः |
| ,, | ,, | ८ | द् | द | ६ | १ | १ | वातेमा | तोत्स्त | ,, | ,, | ११ | ङ्गो | ङ्गो |
| ,, | ,, | १२ | स्तक्त | क्तस्त | ,, | ,, | ,, | स्त | त्तं | ,, | ,, | १३ | रा | री |
| ,, | २ | १३ | स्त | सत | ,, | ,, | ३ | साहो | सोहा | ,, | ,, | ,, | वाग्रे | वोग्र |
| ,, | ,, | १ | न्द | न्दि | ,, | ,, | ,, | ष्टः | ष्टः | ,, | ,, | ,, | ति | त्ति |

| प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | २ | ९ | माह | माहा।स्वर्णोति | ११ | १ | १२ | गं | री | १६ | १ | १ | स्मे | स्से |
| ९ | १ | १ | ह्वं | ह्वे | ,, | २ | २ | त | ता | ,, | ,, | ३ | णं | णे |
| ९ | २ | ७ | हं | हे | ,, | २ | ४ | ष्टि | ष्ठि | ,, | ,, | ५ | दां | दो |
| १० | ,, | ४ | इ | ई | १२ | २ | ६ | सं | से | ,, | ,, | ५ | त | व |
| ,, | ,, | ६ | श | शै | ,, | २ | ६ | या | पा | ,, | ,, | १२ | ङ्कं | ङ्के |
| ,, | ,, | १० | थौ | थो | ,, | २ | ११ | म | म् | ,, | ,, | ,, | स्स | स्स |
| ११ | १ | १ | ङ्क | ङ्करः | ,, | २ | ,, | म | मरु | १७ | ,, | १ | षि | षित |
| ,, | ,, | ,, | र्द्धं | र्द्धा | ,, | २ | १२ | णि | त्राणि | ,, | २ | ९ | सु | स्र |
| ,, | ,, | ,, | ।स्थ | स्थि | १३ | १ | ७ | ष्ठे | ष्टे | १८ | १ | ३ | नेः | नैः |
| ,, | ,, | ,, | द्धा | द्धौं | ,, | १ | १० | ० | पु. की. | ,, | ,, | ९ | हं | हे |
| ,, | ,, | २ | ग | ज | ,, | २ | १ | पितीश्वा | तिम्पिना | ,, | २ | १८ | त्मा | त्मी |
| ,, | ,, | ६ | भ | भू | ,, | २ | १० | क | क् | ,, | ,, | ६ | म्त्रि | न्त्रि |
| ,, | ,, | ९ | वा | वो | १५ | २ | ४ | ड्गौ | ङ्गौ | ,, | ,, | ६ | शू | शू |

| प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २४ | २ | १० | द्र | द | ३० | १ | ६ | भृंग्या | भृङ्ग्या | ३० | २ | ९ | व्या | षा |
| २७ | १ | २ | यांति | यान्ति | ,, | ,, | ६ | लंकु | लङ्कु | ,, | २ | ९ | ष्ठ्या | ष्ठा |
| ,, | ,, | ७ | यांति | यान्ति | ,, | ,, | ६ | शंभो | शम्भो | ,, | २ | १० | श्रौतवा | अतिवी |
| ,, | ,, | ७ | वंतं | वन्तं | ,, | ,, | ७ | वंति | वन्ति | ,, | २ | ,, | ष्ठ्या | ष्ठा |
| ,, | २ | ६ | अंते | अन्ते | ,, | २ | ८ | नांत | नान्त | ३१ | १ | ८ | स्वि | खि |
| ,, | ,, | ६ | भंते | भन्ते | ,, | १ | ११ | त्म | न्म | ,, | २ | ८ | ष्म | ष्ण |
| ,, | ,, | ६ | जंते | जन्ते | ,, | २ | ४ | लव | लवि | ३२ | २ | १० | ददे | देदी |
| २८ | १ | ११ | चद्रा | चन्द्रा | ,, | २ | ४ | ल्या | ल्पा | ३३ | २ | ,, | ह्ला | ह्ल |
| २९ | ,, | २ | लंक्रु | लङ्क्रु | ,, | २ | ६ | ण्ठं | ण्ठ | ३७ | २ | ८ | ज्वा | ज्ज्वा |
| ,, | ,, | ६ | तांत | तान्त | ,, | २ | ६ | द्य | द्यु | ३८ | २ | १० | ते | तेन |
| ,, | ,, | ८ | त्या | त्याः | ,, | २ | ७ | तो | यो | ३९ | १ | ६ | र्भ्म | र्म्म |
| ,, | २ | ३ | न्त | न्ते | ,, | २ | ८ | न्त | न्तर | ४० | ,, | ४ | र | रै |
| ३० | १ | ५ | भव | भय | ,, | २ | ९ | षक | पक | ,, | ,, | ४ | र्दे | दि |

॥ ५७ ॥

| प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. | प. | पृ. | पं. | अ. | शु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४० | १ | ४ | कै | क | ४९ | २ | १० | मय | मप | ५१ | २ | ७ | वा | वाव |
| ,, | ,, | ४ | द | दि | ५० | १ | ४ | कल्यो | कल्पो | ५२ | १ | ३ | वः | वेशः |
| ,, | ,, | ४ | म्पी | म्पा | ५० | ,, | ९ | ष्तु | ष्णु | ,, | ,, | ७ | त्ता | ता |
| ४१ | २ | ११ | ह्य | ह्म | ५१ | ,, | १ | व | र्वै | ,, | ,, | ८ | ण्ड् | ण्ड् |
| ४९ | २ | २ | वत् | वात् | ,, | ,, | ९ | स्य | स्ये | | | | | |

वालिशातां मम कृतिनः परिपश्यन्तु । निजपृथुकस्य पितर इव मुदितास्सन्तु ॥ १ ॥—कवेरियम्प्रार्थना ।

प्रारभ्यवस्वेकमितावसाना श्रीशङ्करध्यानसुरत्नमाला ।
श्रीनीलकण्ठेश्वरपार्श्वसंस्थे सिद्धेश्वरेऽयन्त्रि सुयन्त्रणे या ॥ १ ॥
युगरसनवचन्द्रे वत्सरे पूर्णिमायाम् कुजयुतासितशुक्रे याच पूर्णाऽङ्कनातः ।
नवशशिमितपर्णात्पूर्णतां यावदाप्ता तदवधि किल काशी-यन्त्रणे यन्त्रिता सा ॥ २ ॥—युग्मम् ॥
काशीयन्त्रालये काश्यां कवेराज्ञामवाप्य सा । यन्त्रालयाधिपतिना मुद्रितेयं विदाम्मुदे ॥ ३ ॥



॥ ५६ ॥